1

वि॰टी॰
१

श्रीगणेशायनमः अथविवाहवृंदावनव्याख्यानंलिख्यते तीर्थानामधिपःकुम्भच्छितपदोसंत्यक्तवेलास्थितिर्युत्पर्याप्तकलद्विजाधिपसमीक्षाप्तोरु
मुत्सूरभूत् लक्ष्मीशोखिलदानवारिसततप्रस्निग्धसद्मक्षितिर्घोषध्वस्तमलोजयत्युरुकृपासिंधुर्गुरुःकेशवः १ अथचतुष्टयवाची तत्रप्रथमंगुरुपक्षे के
शवोगुरुर्जयतिसर्वोत्कर्षेणवर्तते गृणात्युपदिशतिशास्त्राणीतिगुरुः तमेवसर्वोत्कर्षंद्योतयति तीर्थानामधिपइत्यादिविशेषणैः तीर्थाध्वरेगुरौमार्गेष्वित्य
भिधानात् तीर्थानांगुरूणामधिपःमहागुरुरित्यर्थः तल्लक्षणमाहस्मृतिः पितापुत्रमुत्साद्यसंस्कृत्यवेदान्वेदार्थांश्चग्राहयित्वावृत्तिंकल्पयतिसमहागुरुर्भवतीति
यद्वा तीर्थानांगंगादीनामधिपःसर्वतीर्थमयोगुरुरितिस्मृतेःकुम्भच्छितपदःकुम्भतोराजानः तैःश्रितंसेवितंपदंयस्यासौतथा असंत्यक्तवेलास्थितिः नसंत्यक्ता
वेलासुपूर्वाह्णादिकालेषुस्थितिर्विहिताचारोयेनासौतथा पर्याप्तकलद्विजाधिपसमीक्षाप्तोरुमुत्सूरभूत् यस्मात्पर्याप्ताःप्राप्ताःकलाःपठनादयोयस्तेप
र्याप्तकलाःतेचतेद्विजाधिपाश्चविप्रश्रेष्ठास्तेषांसमीक्षासंदर्शनंतया आप्ताप्राप्ताउरुःअधिकामुद्हर्षःतस्यपूरस्तंबिभर्तीतितथा लक्ष्मीशःपशुधान्यादि
धनवान् यद्वालक्ष्मीनाम्नीममजननीतस्याईशःपतिः अखिलदानवारिसतत प्रस्निग्धसद्मक्षितिः अखिलानिअनेकानिचतानिदानानिचतेषांवारिउद
कंतेनसततमनवरतंप्रस्निग्धाप्रकर्षेणार्द्रासद्मक्षितिर्गृहभूमिर्यस्यासौतथा घोषध्वस्तमलः घोषेण अध्ययनादिघोषश्रवणेनध्वस्तोमलःपापंयेनसतथा
जनानामितिशेषः उरुकृपासिंधुः उरुःपृथ्वीयाकृपातस्याःसिंधुःकृपासागरः अथसमुद्रपक्षेकथंभूतःसिंधुः तीर्थानामधिपस्तीर्थराजः कुम्भच्छितपदःकुम्भ
तःपर्वताःमैनाकादयः तैःश्रितमाश्रितंपदंस्थानंयस्यासौतथा पदंव्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यभिधानात् असंसक्तवेलास्थितिः वेला
समुद्रतीरंतस्याःस्थितिर्मर्यादाअसंत्यक्तावेलास्थितिर्येनसतथा यदित्यव्ययं यत्यदाकालेपर्याप्तकालःपरिपूर्णकलोद्विजाधिपश्चंद्रस्तस्यस
मीक्षासमुदयःतेनआप्ताप्राप्ताउरुरधिकतरामुद्हर्षोयेनसतथा सदापूरभृज्जलपूरभृत्स्यात् चंद्रोदयेहिसमुद्रस्यजलभरः अत्रापिपूर्णचंद्रोदये
अधिकपूर इतिभावः लक्ष्मीशः लक्ष्म्याईशःपिता अखिलदानवारिसततप्रस्निग्धसद्मक्षितिः अखिलादानवारयोदेवाःतैःसततंप्रस्निग्धाशोभमाना

रामः
१

द्रादिदेवाः तैः सततं प्रस्निग्धाः शोभमानाः सद्मक्षितिः स्थानभूमिर्यस्याः सा तथा इंद्रादिदेवैः सेवित इति ताः स्वर्यार्थः घोषध्वस्तमलः घोषेण नामगर्जनेन ध्व स्तो मलः येनासौ तथा उरुकृपासिंधुः महाकृपासागरः स्थावरजंगमजगत इति शेषः आदित्याज्ज्वायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्याद्युक्तेः इत्येते मदुदितश्लो कस्यार्थः अथ प्रकृतं बध्नाति स्मविवाहपूर्वकपरं हंदावनकेशवादित्योपक्कुटिलोक्तियुक्तिबहुलं बहर्थगूढं पदैः हेलागम्यमनल्पहृष्टसुधियां तन्वंतरेषां तयांतस्मात्तद्विवृत्तिविशेषसहितामारभ्यमस्युत्तकः रत्नानाकलागमपटुर्भुवि गीतकीर्तिः श्रीकेशवस्य तनयः कुरुते गणेशः टीकां भ्रमांधतमसापहरां वि वाहवृंदावनस्य करपीडनदीपिकाख्यां इव्याख्यामात्रेण तुष्यंतु ये केचोच्चावचाइह मतिमंतस्तु सद्युक्तिविशेषरचनैरपि ४ कृत्वा दोगरहलाघवास्यकरणांति थ्यादिसिद्धिद्वयं श्लोकैः श्राद्धविधिं सवासनं तया लीलावतीं व्याकृतिं सप्रक्षेपमुहूर्ततत्त्वनिर्वृतिं पर्वादिसत् निर्णयं तस्मात्मंगलनिर्णयाद्यम कृतावैवाह

2

श्रीशार्ङ्गिणोः सृजतु वो नवसन्निवेशः क्लेशव्ययं चलवलन्नयनांचलश्रीः यत्रांचलग्रथनमंगलमाचचार शृंगारहारमणि कौस्तुभरश्मिगुंफः १॥

सद्दीपिका ५ श्रीभरद्वाजमुनिश्रेष्ठवंशोद्भव औदीच्यज्ञातिमंडनः सकलागमाचार्यवर्यो ज्योतिर्विकुलावतंसोनेककला कलापचतुरः श्रीदैवज्ञराणगतनयः श्रीकेशवार्कः करणः कंठीरवाद्युत्का निजां सत्कविताविशेषरचनासमेतां वाक्यविचारचातुरी दर्शयन् संहितास्कंधै कदेशभूतं विवाहपटलं चिकीर्षुर्जन्मजन्मांतरार्जितदुरितोत्पन्नप्रत्यूहनिरासेन ग्रंथसमाप्त्यर्थं समाप्तेपि ग्रंथे तत्परिचयार्थं शिष्टाचारपरिपालनेन शिष्यशिक्षार्थं च आशिर्लक्षणं मंगलमाचरन् श्रीलक्ष्मीनारायणयोर्विवाहलक्षणं प्रथमसंनिवेशनं वसंततिलकवृत्तेन वर्णयति श्रीशार्ङ्गिणोरिति श्रयते विश्वमेतां सा श्रीः शार्ङ्गं यस्यास्तीति शार्ङ्गी तयोर्लक्ष्मीनारायणयोः स नवसन्निवेशः नवसंगमः संनिवेशस्तु संस्थायां प्रवेशे संगमेपि च त्यभि

सद्मसितिः स्थानभूमिर्यस्यासौ तथा यत्स्थाने विष्णवादिदेवा निवसंतीत्यर्थः घोषध्वस्तमलः घोषेण गर्जनेन ध्वस्तः मलः पातकं येन स तथा सुग्रीवसफ
लजन्मयेव संतिमहोदधौ अहर्निघोषेण ब्रह्महत्या विलीयत इति पुराणात् अथ विष्णुपक्षे केशवो नारायणो जयति गुरुः उद्धवार्जुनादीनां ज्ञानोपदेष्टा
तीर्थानामधिपः गंगादीनां तस्मात्सजन्यत्वात् कुम्भृत्कृतपदः कुम्भृद्धरणीधरः शेषः तत्राश्रितं पदं यस्य स तथा शेषशायीत्यर्थः असंत्यक्तवेलास्थितिः अस
त्यक्तावेलायां समुद्रतीरे द्वारकाद्वौ स्थितिर्निवसतिर्येनासौ तथा यत्पर्याप्तकलद्विजाधिपसमीक्षा प्राप्तोरुमुत्सूरभृत् यस्मात्पर्याप्ताः शौर्यादिकला येन सः यत्प
र्याप्तकलः द्विजाः पक्षिणस्तदधिपो गरुडः यत्पर्याप्तकलश्चासौ द्विजाधिपश्चेति तस्य समीक्षा संदर्शनं तया आप्ता उरुमुत् महती मुद् हर्षस्तस्याः सूस्तं बिभर्तीति
तथा लक्ष्मीशो लक्ष्मीपतिः अखिलदानवारिसततप्रस्निग्धसद्मसितिः दानवारिः दंतिनां मदजलं तेन सततं प्रस्निग्धा आर्द्रीकृता अखिला समग्रा दा
नवारिसततप्रस्निग्धा सद्मसितिर्गृहांगणभूमिर्यस्यासौ तथा कृष्णरामावतारे यस्य गृहांगणभूमिरेवंविधेति पुराणप्रसिद्धा घोषध्वस्तमलः घोषाणां व्रज
स्थितगोपादीनां ध्वस्तः मलो येनासौ तथा कृष्णावतारे प्रसिद्धमिदं उरुकृपासिंधुः महासत्वगुणत्वात् अथ सूर्यपक्षे केशवः सूर्यः केशा रश्मयः प्रशस्ताः
केशा यस्यासौ केशवः केशाद्वोऽन्यतरस्यामिति प्रशंसायां मतुबर्थे वः कथंभूतः केशवः गुरुः रोमकमयासुरादीनां ज्योतिःशास्त्रादिज्ञानोपदेष्टा अत एव ती
र्थानामधीपः तीर्थानां ज्योतिःशास्त्रादीनां अधिपः प्रवर्तकः तीर्थं शास्त्राध्वरक्षेत्रेष्वित्यभिधानात् कुम्भृत्कृतपदः कुम्भृदुदयाचलः तत्राश्रितं पदं येन स तथा
उदयशिखरिशृंगस्वर्णसिंहासनस्थ इत्युक्तः असंत्यक्तवेलास्थितिः वेला कालः तस्याः स्थितिर्वत्सरः दिनादिनियमः असंत्यक्ता वेलास्थितिर्येनासौ तथा य
त्पर्याप्तकलद्विजाधिपसमीक्षा कर्त्री आप्तोरुमुत्सूरभृत्स्यात् यस्मात्सूर्यात्पर्याप्ताः प्राप्ताः कला येनासौ यत्पर्याप्तकलः स चासौ द्विजाधिपश्चंद्रस्तस्य समी
क्षा संदर्शनं चंद्रस्य प्रतिदिनं कलावृद्धिः क्षयश्च सूर्यकिरणसंसर्गाद्भवतीति ग्रहगणिते वासना प्रसिद्धा आप्तास्तद्दर्शनलालसाः तेषां उरुमुत्सूः महाहर्ष
भरस्तं बिभर्ति पुष्णातीति तथा लक्ष्मीशः लक्ष्म्या दीप्तयः तासामीशः अखिलतेजसामधीशः दानवारिसततप्रस्निसद्मसितिः अखिलाश्च ते दानवारयश्चेंद्र

षेणाद्यः वृंदावनंनामवनंयमुनातीरेप्रसिद्धं यद्वाविवाहानांवृंदंविवाहवृंदंतद्वतीतिविवाहवृंदावनं अत्रहिसम्यक्सदसत्फलनिरूपणेनअसत्समयपरित्या
गात्समयविवाहकरणेनपुत्राद्यभिवृद्धिद्वाराविवाहावनत्वमुक्तमस्यग्रंथस्यकथंभूतंविवाहवृंदावनंस्फारत्स्फुरत्परिमलाढ्यफलंस्फारंतितानिस्फारंतिविस्त
तानिस्फुरस्फूर्तौस्फुरंतितानिस्फुरंतिविकसमानानिपरिगतोमलःपरिमलःदोषाभावःकुगतिप्रादयइत्येतितत्पुरुषःतेनाढ्यानिपरिमलाढ्यानिस्फारंतिस्फुरं
तिपरिमलाढ्यानिफलानिनस्तत्रफलादीनियस्मिंस्तथापुनःकीदृशंविचाररम्यंनानाविधविरुद्धमुनिवाक्यानांपूर्वपक्षसिद्धांतरूपसारासारविचारेणरम्यं किंकृत्वा
गर्गादिगीर्भ्यःसारंसंवर्ग्यगर्गादयोयवनसितपुलस्त्यादीनामुपलक्षणंतेषामप्यत्रमतोपन्यासदर्शनात् गर्गादीनांगिरःवचनानितेभ्यःएकदेशीयादिवाक्यप
रित्यागेनबहुमतस्वीकारात्मकंसारंसंवर्ग्यमेलयित्वा नकेवलंसमत्वेनैवसारंसंवर्गितं किंतुवराहमिहिरादिमतानुसारं आदिशब्देनलल्लश्रीपतिश्रीधरादी

3

स्फारत्स्फुरत्परिमलाढ्यफलं विवाहवृंदावनं विरचयामिविचाररम्यं २

नांग्रहणं वराहमिहिरादीनांमतमनुसरतीतितथागर्गादिवाक्यानांसारासारपर्यालोचनयावराहादिमतानुसारं विचार्यविरचयामीत्यर्थः अत्रत्यानांमद्वच
नानामपिगर्गादिमुनिवाक्यमूलत्वेनप्रामाण्यमितिभावःस्फारदित्यादिविशेषणद्वयेनपूर्वग्रंथेभ्योस्यवैशिष्ट्यंद्योतितं अथसंबंधादिचतुष्टयकथनमंतरेण
शास्त्रारंभवैयर्थ्यप्रसंगःतदुक्तंसिद्धिःश्रोतृप्रवृत्तीनांसंबंधकथनाद्यतः तस्मात्सर्वेषुशास्त्रेषुसंबंधःपूर्वउच्यते किमेवात्राभिधेयंस्यादितिपृष्टस्तुकेनचित्
यदिनप्रोच्यतेतस्मैफलशून्यंतुतद्भवेत् सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित् यावत्प्रयोजनंनोक्तंतावत्तत्केनगृह्यतइति एवंवृद्धोपदेशंहृदिमत्वाअ
नेनैवपद्येनसंबंधःसूचितःपरिमलाढ्यफलमित्यनेनअभिधेयंसूचितं तस्यास्यशास्त्रस्यचप्रतिपाद्यप्रतिपादकत्वेनसंबंधोवाप्रयोजनंतुशुभाशुभफलादे

धानात् वः युष्माकं क्लेशक्षयं स्रजतु करोत्वित्याशीः नवसंनिवेशजातिं विशेषणद्वारेणाह चलवलन्निति चलतस्तौ चलौ वलतस्तौ वलंतौ स्थानांतर
गमनं चलनं तस्मात्परावर्तनं वलनं चलाश्च वलंतश्च चलवलंतः नयनानामंचलाः प्रांतानयनांचलाः चलवलंतश्च ते नयनांचलाश्च चवलंनयनांचला
स्तेषां श्रीः शोभा यस्मिन्नवसंनिवेशे स तथा समासांतविधेरनित्यत्वात् कप्रत्ययाभावः सानुरागपरस्परावलोकनेन नयनांचलौ चचलौ वलंतौ चेति जातिः ल
ज्जाकुलत्वान्नयनांचलाभ्यामेवावलोकनं युक्तं सकः यत्र नवसंनिवेशे शृंगारहारमणिकौस्तुभरश्मिगुंफः अंचलग्रथनमंगलमाचचार आचीर्णवान् शृंगा
रस्य हारः शृंगारहारः तस्य मणिः शृंगारहारमणिः स च कौस्तुभश्च शृंगारहारमणिकौस्तुभौ तयोः रश्मयस्तेषां गुंफः गुंफनग्रथने गुंफनं गुंफः ग्रथनमिति या
वत् अंचलयोर्ग्रथनं तदेव मंगलं अंचलग्रथनमंगलं श्रियः शृंगारहारमणिः शार्ङ्गिणस्तु कौस्तुभः तद्रश्मीनां परस्परं ग्रथनं अंचलग्रथनभावं प्रापेत्यर्थः

संवर्ग्यगर्गभृगुभागुरिरैभ्यगीर्भ्यः सारं वराहमिहिरादिमतानुसारं

विवाहसमये वधूवरप्रावृतवस्त्रांचलग्रथनमंगलत्वेन क्रियत इति शिष्टसमाचारः स तु प्रागेव शृंगारहारमणिकौस्तुभरश्मिगुंफनेनैव निष्पन्न इति
भावः अत्र मंगलार्थं गणादिदोषनिरासार्थं वादौ श्रीशब्दप्रयोगः तदुक्तं देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ते सर्वे नैव निंद्याः स्युर्लिपितो
गणतोऽपि वेति यथा श्रियः कुरूणामधिपस्येत्यादौ अथास्य ग्रंथस्य आर्षमूलत्वेन प्रामाण्यं तथा प्राचीनग्रंथेभ्यो वैशिष्ट्यं द्योतयन् संबंधादिचतु
ष्टयगर्भं तदारंभहेतुं वसंततिलकयाह संवर्ग्येति अहं विवाहवृंदावनं नाम ग्रंथं विरचयामि अन्वर्थं नाम विवाह इव विवाहः स्त्रीपुरुषसमाग
मलक्षणः तदर्थं वृंदावनमिव वृंदावनं विवाहवृंदावनं कृष्णो हि तत्र गोपीभिः सह परस्परपाणिधारणपूर्वकं रासक्रीडादिकं कृतवान् अन्योपि सूरसेनसु

4

तिरपि दैवज्ञैः शास्त्रतत्त्वज्ञैर्मुहूर्तोन्विष्यते यदि सन्मुहूर्तः समन्वेष्यो नान्यैर्नक्षत्रसूचकैः इति अतएव कश्यपेन वेदपारगसाहित्येनैव नक्षत्रसूचकस्य
श्राद्धे पूज्यत्वं स्मर्यते अरिर्विश्वंभरहंता चव्यंगो नक्षत्रसूचकः काणः कुंठश्च मंदश्च श्वित्री मूर्खः सुवृत्तवान् सर्वेश्राद्धेनियोक्तव्या मिश्रितावेदपारगैरिति दे
षोपि स्मर्यते प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयं विनाशास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातक इति अतो सम्यक् शास्त्रवेदनादपयाशास्त्रफलादेशको
नक्षत्रसूचकः नतु शास्त्रैकदेशवेत्तेति सिद्धं अतएवोक्तं गर्गादिभिः वनं समाश्रिता येपि निर्ममा निःपरिग्रहाः अपि ते परिपृच्छंति ज्योतिषां गतिकोविदं
मुहूर्ततिथिनक्षत्रमृतवश्चायने तथा सर्वाण्येवाकुलानि स्युर्नस्यात्सांवत्सरो यदि नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता चक्षुर्भूतो हि यत्रैष पापं तत्र न वि
द्यत इत्यादि मुक्तावल्यादिष्वपि दशदिनकृतपापं हंति सिद्धांतवेत्ता त्रिदिनजनितमंहस्तंत्रवेत्ता निहंति करणभगणवेत्ता चैकरात्रोत्थपापं जनयति बहुपापं च
कनक्षत्रसूचीति एकः केवलः नक्षत्रसूचकः अतोस्य शास्त्रस्यैकदेशाध्ययनेपि त्रैवर्णिकस्यैवाधिकारोस्तीति सिद्धं तत्राप्यार्यवाक्यानां पाठमात्रेणापि
फलमस्ति स्मृत्यादिपठनवदिति अथ विवाहादि सर्वकार्येषु नारदादिभिः प्रथममुद्दिष्टत्वात्संचागशुद्धेः प्राधान्यं तत्रापि प्राधान्यं नक्षत्रशुद्धेः तथाचा
हुः भावांशशुद्धोदयमप्यशुद्धं भशुद्धिहीनं प्रवदंति संतः तस्माद्विशेषेण भशुद्धिमादौ विचार्य कार्ये शुभमाहुरार्या इति अतः सैव प्रथममभिधीयते सा
तूक्तनक्षत्राणामेव अतः प्रथमं शुभनक्षत्राण्युक्त्वा तत्प्रसंगेन शुभान्सौरमासांश्चाह रवंशस्यवृत्तं ध्रुवाणि रोहिणीत्र्युत्तराणि अनुराधादीनि प्रसिद्धा
नि करो हस्तः तेषां समाहारे एकवद्भावः क्लीबत्वं च मघास्वात्यौ प्रसिद्धे अयमेकादशनक्षत्रात्मको गणः चेद्दूषणैः वक्ष्यमाणपापवेधादिदोषरहितो
तदा मृगीदृशां स्त्रीणां मृगजातिः स्त्री मृगी तस्यां दृगिव दृग्यासां तासां करग्रहे विवाहे मंगलकृत्स्यात् वक्ष्यति च स्फुरद्दूषणभूषणेत्यादि क्रूरवेधादि
दोषे त्वशुभफलं तत्र तत्र वक्ष्यति रवेरिति षण्णां गृहाणां समाहारः षड्गृही मकर आदिर्यस्याः सा मकरादिः सा चासौ षड्गृही च मकरादिषड्गृही अमीना
मीनरहिता मकरकुंभमेषवृषमिथुनस्यार्को विवाहे मंगलकृदित्यर्थः नन्वत्र नक्षत्रग्रहादीनां शुभफलकर्तृत्वं कथं युज्यते प्राचीनसदसत्कर्मविपाक

शः तज्जिज्ञासुरधिकारी एतदुक्तं भवति चतुराननमुखाद्विनिःसृतस्यास्य शास्त्रस्य नारदवसिष्ठादिमुनिपरंपरयास्मिन्लोके प्रथितस्य ब्रह्मणा सह संबंधः उ
क्तं च नारदेन अस्य शास्त्रस्य संबंधो वेदांगमिति धातृतः इति अस्य शास्त्रं वेदांगमिति कृत्वा धातृतः संबंध इत्यन्वयः यद्वा वक्ष्यमाणाभिधेयस्य तत्प्रतिपादकशास्त्र
स्य च प्रतिपाद्यप्रतिपादकत्वेन संबंधः नक्षत्रशुद्धिकालमीमांसाराशिमेलकनवांशविचारग्रहाद्गुणचंद्रताराबलराहुलत्तातिथ्यादिलग्नशुद्धिगोधूलिकगोचरनि
र्णय शुभाशुभयोगभावफलयोगबलसामुद्रिकलक्षणादिमिश्रफलत्वपूर्वप्रश्नादिकप्रतिपाद्यत्वादत्राभिधेयं प्रयोजनं तु जन्मजन्मांतरार्जितसदसत्कर्मवि
पाकरूपशुभाशुभफलसूचकनक्षत्रग्रहफलादिना जगतः शुभाशुभनिरूपणं तत्राशुभफलं ग्रहशांत्यादिना ग्रहबलाद्युपेतः सत्समये विवाहादिसंपादनेन च
सच्छकुननिमित्तादिना वंचयिष्यत इति कृत्वा तथा तत्प्रतीकारनिरूपणं च उक्तं च नारदेन प्रयोजनं तु जगतः शुभाशुभनिरूपणमिति तज्जिज्ञासुरधिकारी स
च द्विज एव न तु शूद्रादिः वेदांगत्वात् यतो द्विजैरेव सांगो वेदोऽध्येतव्यो ज्ञातव्यश्च उक्तं च तस्माद्द्विजैरध्ययनीयमेतत्पुण्यं रहस्यं परमं च तत्त्वमिति अध्यापने
तु ब्राह्मण एवाधिकारी क्षत्रियवैश्ययोरध्यापननिषेधात् महाप्रयोजनं तु वेदांगाध्ययनेन धर्मपरिपालनत्वात् जगतोऽशुभनिराकरणेन च सुकृतसंचयद्वा
रा त्रिकालदर्शित्वेन योगितुल्यावस्थां गतस्य योगिवन्निरतिशयानंदावाप्तिलक्षणमोक्षावाप्तिः उक्तं च श्रीमद्भागवते गर्गं प्रति नंदेन ज्योतिषामयनं साक्षा
द्यत्तत् ज्ञानमतींद्रियं प्रणीतं भवता येन पुमान्वेद परावरमिति सिद्धांतेपि यो ज्योतिषं वेत्ति नरः स सम्यक् धर्मार्थमोक्षान्लभते यशश्चेति गर्गोपि ग्रंथतश्चार्थ
तश्चैतत्कृत्स्नं जानाति यो द्विजः अग्रभुक् स भवेच्छ्राद्धे पूजितः पंक्तिपावन इति अत्र सम्यक्पदग्रहणेन असम्यक्शास्त्रपरिज्ञानाद्यथाशास्त्रं विवाहादि
फलादेशकस्य पंक्तिदूषकत्वमस्तीति गम्यते यत उक्तं तेनैव अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते स पंक्तिदूषकः पापात्ज्ञेयो नक्षत्रसूचकः नक्षत्रसू
चको द्विष्टमुपवासं करोति यः स व्रजत्यंधतामिस्रं सार्द्धमृक्षविडंबिना इति ऋक्षविडंबिना नक्षत्रसूचकेन अतश्च यथाशास्त्रमादेशक एव नक्षत्रसूचकः
न त्वकृत्स्नशास्त्रपरिज्ञाता दैवज्ञत्वं प्रपद्यत इत्युक्तत्वात् पूर्वार्जितसदसत्कर्मविपाको दैवमित्युच्यते तज्जानातीति दैवज्ञः तस्य भावो दैवज्ञत्वं बृहस्

धातव्यः तथा च नारदः सर्वाश्रमाणामास्थेयं गृहस्थाश्रममुत्तमं यतस्तदपि योषायां शीलवत्यां स्थितं ततः तस्याः सच्छीललब्धिस्तु सुलग्नवशतः खलु पिता
महोक्ता संवीक्ष्य लग्नशुद्धिं प्रवक्ष्ये इति अतो दैवपत्नयोरन्यतरेण फलसिद्धिर्न भवतीत्यत्र दृष्टांतमाह याज्ञवल्क्यः यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्
तद्वत्पुरुषकारेण विना दैवं न सिध्यतीति अत एव ग्रंथकारोपि वक्ष्यति प्राक्कर्म बीजं सलिलानलोर्वी संस्कारवत्कर्म विधीयमानं योषा य योषा पवनस्तत्राप्त
दा सदाचारवतां न हानिरिति यत्प्राक्कर्म तस्य योषायां योषायां च अधुना विधीयमानं कर्म भवति किंवत् बीजं सलिलानलोर्वी संस्कारवत् यथा सद्बीजं शुभैः सलिला
दिसंस्कारैः संस्कृतं सदुदेति वर्धते च तद्वत्प्राक्कर्मापि विहितेन सत्प्रयत्नेन वर्धते अन्यथा क्षीयत इत्यर्थः तस्मात्कारणाच्छास्त्रविहितविवाहादि शुभकालग्रहशां
तिचिकित्सादिसदाचारवतां पुरुषाणां सदा न हानिः स्यात् अपि च दैवं किल पुरुषनिष्ठं तद्देशकालवशत एव विपच्यते दुष्टमपि दुष्टांतरस्ताहितं नैव दुष्टकारिय



रवेरमीनामकरादिषड्गृही करग्रहे मंगलकृन्मृगीदृशाम् ३

श्वातुर्जनोरंध्रान्वेषणेन अत एवोक्तं श्रीपतिना अकालचर्या मृगया च साहसं सुदूरयानं गजवाजिवाहनं गृहे परेषां गमनं च वर्जयेद्गृहेषु राजा विषमस्थितेष्विहेति
वसंतराजोपि नैतद्दैवमिह यन्न देहिनां पूर्वकर्म विहितं कुतोपि हि देशकालवशतो विपच्यते युज्यते व्यवहितं कथं तु तदिति एतद्दैवं प्रामाण्यं शेषं स्पष्टं अतस्त्वदुष्टमपि
दैवफलं विवाहादि सत्समयावाप्तिरूपयत्नेन निवर्त्यत एव यथाह स एव सर्पवह्निविषकंटकादिकं येन दैवशरणोपि मानवः दूरतस्त्यजति पौरुषं सदा तेन नः स्फुरति
दैवताधिकं पौरुषेण हृदये सितां गतिं प्राप्नुवंति पुरुषाः सुमेधसः यांति दैवशरणीलयं यथा पादयोर्ज्वलति दावपावके इति अतः शकुनगोचरादिना आवेदितं अ
शुभं दैवफलं शुभेन प्रयत्नेन संतोवंचयंत्येव तथा च स एवाह तन्निरूप्य शकुने न दुःखदं वंचयंति निपतं समुद्यतं पौरुषेण पुरुषाः सुमेधसः संश्रयंति पुनः

रूपस्य दैवस्यावश्यंभावित्वात् तथा च शौनकः येन तु यस्माप्तव्यं तस्य विधानं सुरेशास्तविनोपि यः साक्षान्नियतिज्ञः सोपि न शक्तोन्यथाकर्तुं तद्विज्ञानोपा यलग्नविधानेन संप्रवक्ष्यामि जन्मन्यथवा प्रश्ने तत्स्य दशफल विवाहेपीति अतो यथोक्तविवाहादिसमया दैवप्रापकज्ञानोपायाः विवाहादिषु यादृशसमया वाप्तिस्तादृशं दैवमस्तीति ज्ञेयं यत उक्तं तेनैव वरणप्रदानपरिणयशचीप्रपूजाभिषेककरणानि सुशुभेति थौ विलम्बेन न भवंति किलाल्पपुण्यानामिति अतो विवाहादिशास्त्रं दैवज्ञापकमेवेति नैवं सत्युक्तमन्यसे विवाहादिषु विहितशुभकालस्य यंत्रादिना प्रयत्नेन पुरुषसाध्यत्वात् सत्युभयपयोगे कर्मसिद्धिर्न केवलं दैवेनेति तथा च वक्ष्यति फलेद्यदि प्राक्तनमेव तत्किं कृष्याद्युपायेषु परः प्रयत्नः श्रुतिः स्मृतिश्चापि नृणां निषेधविध्यात्मकेक्कर्मणि किं निषण्णेति यदि तु दैवमेव फलेत्तदा सर्वोपि जनः कृष्याद्युपायेषु कथं प्रवर्तते किंच निषेधविध्यात्मकाः श्रुतिस्मृत्यादयोपि निरर्थकाः स्युः न वृक्षमारोहेन्न कूपमवेक्षेत न बाहुभ्यां नदीं तरेन्न

ध्रुवानुराधामृगमूलरेवतीकरं मघास्वातिरदूषणो गणः

संशयमभ्यापद्यतेत्याशीनामाश्वलायनादिकल्पानां श्रीकामः पुष्टिकामो वा ग्रहयज्ञं समाचरेदित्यादिय... दिवचनानां चिकित्सादिशास्त्रस्य च वैयर्थ्यप्रसंगः स्यादित्यर्थः तथा च याज्ञवल्क्यः दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता तत्र दैवमभिव्यक्तं पौरुषं पौर्वदे... कर्मसिद्धिः फलावाप्तिरिष्टानिष्टप्राप्तिलक्षणा सा च केवलं दैवेन व्यवस्थिता अपि तु पुरुषकारेपि ——— पुरुषकारः प्रयत्नः अपि च पुरुषकाराभावे दैव... नास्तीत्याह तत्र दैवमिति पूर्वदेहार्जितं पौरुषमेव दैवमित्युच्यते तच्च अल्पपुरुषकारादनंतरं महाफलोदयेन अभिव्यक्तं अतएवाह वसंतराजः पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते उद्यमेन तदुपार्जितं तदा वांछितं फलति नैव केवलमिति तस्मात्प्रयत्नाभावे दैवं नास्तीत्यतो विवाहादिषु शुभकालावाप्तिलक्षणो यत्नः॥ वि

तं उक्तं च विवाहपटलांते तेनैव एवं बुध्वा मतिमान् भविष्यफलमादिशेत्समुद्वाहे इति अतो बौधायनादिविहितेन तच्छांतिरूपेण धर्मेण प्रयत्नात्मकेन त
न्निवर्त्यते धर्मेण पापमपनुदतीति श्रुतेः शुभकालेन तु अशुभदैवफलं निवर्त्यते शुभं तु वर्ध्यते अत एव तन्नैव तेनैवोक्तं सुपरीक्षितं विलग्नं धर्मार्थसुखा
य भवति दंपत्योः तद्विपरीतं निमेषार्द्धनागतातीतिकालेन अपरीक्षितं विलग्नं न हि हि देयं पंडितेन दैवविदा अयशोंबुनिधौ मज्जति शास्त्रमविज्ञाय यो दद्यादिति ।
बृहस्पतिरपि आह स्वभावादेव कालो द्वयं शुभाशुभसमन्वितः अनादिनिधनः सर्वो न निर्दोषो न निर्गुणः तस्मान्निर्दोषकालार्थं मुहूर्तमधिगच्छतां कालः शु
भागुणैर्युक्तो बलवद्भिः शुभप्रदः दोषैर्युक्तोपि च प्राणैर्बहुभिर्व्यस्तयं द्वयोरिति अतः शुभकालबलेन पूर्वकर्मोपार्जितमशुभमपि निवर्त्यत इति सर्वमनवद्यं अ
तो नक्षत्रादीनां कालावयवत्वात्सर्वकर्मसु शुभाशुभफलदातृत्वमस्तीति सिद्धं ३ अथ पूर्वाफल्गुनीपुष्यौ केश्चिदुक्तौ तन्मतनिरासार्थमाह इदं वज्रोपेंद्रव

प्राचेतसः प्राह शुभं भगर्क्षं सीता तदूढा न सुखं सिषेवे

ज्रामिश्रणात्मिको पजातिकेयं प्रकृष्टं चेतो यस्यासौ प्रचेताः तस्यापत्यं प्राचेतसो मुनिविशेषः स भगर्क्षं पूर्वाफल्गुनीनक्षत्रं शिवं शुभमस्मिन्विवाहे यस्मा
ह तस्मिन्नक्षत्रे ऊढा परिणीता सीता सुखं न सिषेवे न सेवितवती वनवासरक्षोहरणादिकं दुःखमेवाप अतो गर्गशौनकनारदादिभिर्नोक्तमिति कृत्वानन्ना
दरणीयमिति भावः ननु विवाहे भगर्क्षविधायकस्य मुनिवचनस्य कथमयं प्रत्यक्षबाधः उच्यते तस्य सीताविवाहात्प्राक् युगविशेषविषयत्वादिति योज
नीयं पुष्यस्तु अतिकामपुष्यति वदैयपि एवं कारणादस्मिन्विवाहविषये स पुष्यः प्रजापतेर्ब्रह्मणः सकाशाच्छापं आप प्राप्तवान् पुष्णाति कार्याणीति पु
ष्यः क्ववंतो निपातः ब्रह्मणः किल विवाहः पुष्ये भूत् अनंतरं शंभुविवाहसमये पार्वतीसौंदर्यदर्शनात्प्रचलितचेतसो ब्रह्मणः परिहितवस्त्रांतश्च्युतवीर्य

त्मनोहितमिति तदैव फलं दुःखदं समुद्यतं शकुनेन निरूप्य पुरुषाः पौरुषेण वंचयंतीत्यन्वयः अथानंतरोक्तेः सर्पवज्रादिदृष्टांतः पौरुषमेव फलसाधनं कथं
नस्यात् उच्यते समानभूमिषु समानसलिलादिसंस्कारेपि फलवैचित्र्यदर्शनात्कारणांतरं कल्प्यते तद्दैवं दैवमिति अत उभययोगे सत्येव फलसिद्धिरिति अथ केचिद्बु
द्धिः कर्मानुसारिणीति मन्यमानाः प्रयत्नोपि दैवानुरूप इति कृत्वा दैवमेव फलसिद्धेः कारणमिति मन्यंते तन्न चतुरस्रं अनवस्थादोषप्रसंगात् तथाहि प्राक्कर्मार्जितपौ
रुषमेव किल दैवमुच्यते अन्त्यः प्रयत्नः प्राचीनपौरुषलक्षणेन दैवेन जन्यः तदपि पौरुषं तत्प्राचीनपौरुषजन्यं तदपि तत्प्राचीनपौरुषजन्यमित्यनवस्था अतः
प्रयत्नोपि दैवप्रेरित इत्यनुपपन्नं नैतन्मन्यामहे नखल्वियमनवस्थादूषणं अनादिसंसारे बीजांकुरन्यायदृष्टांतसद्भावात् न चैतद्युक्तं न हि बीजांकुरन्यायाद्दै
वमेव मूलं इति निश्चीयते नापि प्रयत्नः अतः सत्युभययोगे फलसिद्धिरिति मतं चतुरस्रं एवं चेत्तर्हि शौनकोक्तवाक्यानां पूर्वोक्तानां का संगतिः उच्यते दैवं तु दृढक
र्मरूपमदृष्टकर्मरूपं चेति द्विविधं तत्र दृढकर्मरूपस्यावश्यंभावित्वाद्बृहच्छांत्यादिरूपेण संपूर्णप्रयत्नेनापि तन्निवारयितुं न शक्यते दृढमूलत्वात् खरतरवाता
घातेपि दृढमूलपादपवत् अदृढकर्मरूपं तु प्रयत्नेन निवार्यते प्रशिथिलमूलपादपवत् तथा च जातके ये धर्मकर्मनिरता इत्यादि प्रयत्नाभावे तु विपच्यत इव त
था च तत्रैव पापिष्ठा ये दुराचारा देवब्राह्मणनिंदकाः अपथ्यभोजिनस्तेषामकालमरणं ध्रुवमिति अत एव चिकित्साशास्त्रेपि पूर्वजन्मकृतं पापं व्याधिरूपेण
बाध्यते इति सर्वव्याधीनां साधारण्येन कर्मजन्यत्वेपि साध्यासाध्यत्वेन द्वैविध्यमस्ति तत्रापि कृच्छ्रोपायः सुखोपायो द्विविधः साध्य उच्यते असाध्यो द्विधा
धो ज्ञेयो साध्यो यश्चाप्रतिक्रियः साध्यासाध्यत्वमायाति साध्यश्चासाध्यतां तथा घ्नंति प्राणानसाध्यास्तु नराणामक्रियावतामित्यादिना अचिकित्सितव्याधे
र्दृढकर्ममूलत्वमन्येषामदृढकर्ममूलत्वं निश्चीयते अतो दैवस्येदृशं द्वैविध्यमस्ति अतः शौनकादिवाक्यानां पूर्वपस्परचिंतानामयमर्थः ये न त्विति येन
पुरुषेण यत्प्राप्तव्यं अवश्यं भोक्तव्यं दृढकर्मोपार्जितमिति यावत् तद्बृहस्पतिरप्यन्यथाकर्तुं न शक्तः अर्थादन्यददृढकर्मोपार्जितमन्यथाकर्तुं शक्त इ
त्यर्थः वरणप्रदानेति तद्विज्ञानोपायमिति अत्रायं भावः यस्य परिणयनादिकाले दुष्टो बृहस्पतिः चंद्रादौ दृष्टे सति तदैव पाकस्तादृशमशुभफलमिति ज्ञा

येविवाहइत्यादिनातौविधत्ते शौनकस्तुतौनिषेधति कुलटावैकार्तिकेमासि सौम्येपरवेश्मरताकलहपरादुःखसंतप्तेति शार्ङ्गधरादिभिस्तुतौमध्यमौउक्तौ सर्वसतिदेशाचारतोव्यवस्थाज्ञेया देशेदेशेयास्थितिःसैवकार्येतिवराहोक्तत्वात् दाक्षिणात्याहिमार्गशीर्षेविवाहंकुर्वंति केचित् गुर्जराःकार्तिकेपीत्यादि अतोग्रंथकृतास्वदेशाभिप्रायेणेदमुक्तं इतिसर्वमनवद्यं ५ अथनक्षत्रदोषान्विवक्षुर्वेधदोषस्यमहादोषात्वात्प्राधान्यात्तमुपजातिकाद्वयेनतावदाह यांम्योत्तराःप्रागपराश्चपंचरेखाःरचयेत् विदिक्षुकोणेषुद्वेद्वेरेखेरचयेत् इदंपंचशलाकाख्यंचक्रं तत्रचक्रेसहाभिजिद्विद्विद्वितीयार्गलितानितारःभवर्गःभवेत् अभिजितासहवर्ततेसौसहाभिजित्तेनसहेतितुल्ययोगइतिबहुव्रीहिःतत्रसहस्ससादेशस्यवैकल्पिकत्वंविदि



याम्योत्तराःप्रागपराश्चपंचद्वेद्वेचरेखेरचयेद्विदिक्षु विदिग्द्वितीयार्गलितानितारःसहाभिजित्तत्रभवेद्भवर्गः ६ त
स्मिन्नभिन्नाग्रगतेभिनत्तिग्रहोविवाहर्क्षमशेषमेव स्त्रीपुंसयोरायुरसौम्यवेधःसौम्यव्यधोहंतिसुखानिशश्वत् ७ ॥

शिद्वितीयायारेखातयार्गलितासंबंधाअग्नितारास्कृत्तिकायस्यसतथा कोणस्यद्वितीयरेखातःकृत्तिकादीनिसाभिजितिनक्षत्राणिसव्येनमार्गेणअपसव्येनवान्यसेदित्यर्थःअपसव्यमार्गस्यशिष्टगर्हितत्वात्सव्यमार्गोत्रश्रेयान् ६ तस्मिन्चक्रेअभिन्नाग्रगतविवाहर्क्षंअशेषंसमस्तमेवग्रहोभिनत्ति यस्यांरेखायांग्रहस्तदग्रस्थनक्षत्रंवेदयतीत्यर्थःविवाहग्रहणंविवाहकृत्योपलक्षणं यथाहश्रीपतिःवधूप्रवेशेदानेचवरणेपाणिपीडनेवेधःपंचशलाकाख्येन्यत्रसप्तशलाककेइति अशेषग्रहणंचरणवेधनिरासार्थंतद्विषयंवक्ष्यति वेधफलमाह स्त्रीपुंसयोरिति असौम्यवेधःपापग्रहवेधःस्त्रीपुंसयोरायुर्हंति स्त्रीचपुमांश्चस्त्रीपुंसौ अचतुरादित्वात्साधुःसौम्यव्यधःसौम्यग्रहवेधःशश्वदनवरतंसुखानिहंति ७ अत्रसहाभिजिदित्युक्तं

सहस्रद्वयेनपरामृष्टस्यतंतुमध्यस्थितकणसहस्रेभ्योनिष्पन्ना अंगुष्ठप्रमाणाषष्टिसहस्रमितोवालखिल्यानाममुनयोभूवन्नितिब्रह्मपुराणादौप्रसिद्धं
ततोनुतप्तोब्रह्माज्ञानदृष्ट्यासम्यगवलोक्यपुष्यकृतविवाहनिमित्तमिदमितिकामोद्रेकरूपंवैकृतमितिनिश्चित्यविवाहविषयेपुष्यंशप्तवानितिकृत्वागर्गा
दिभिःसनिषिद्धइतिभावः तथाचशौनकः अब्दचतुष्कात्कन्यागुरुकुलविदूषिणीभवतिपुष्येकृपणापतिसंत्यक्तावैधव्यंवासमाप्नोतीति अन्येपिग्रहेणवि
होप्यशुभगान्वितापीति अथविवाहेप्रावृट्कालादिकंकैश्चिदुक्तंतन्मतंनिरस्यति ४ इहवंशावंशस्थमिश्रणात्मिकोपजातिकाप्रावृड्वर्षाः वसंतःप्रसिद्धः ऊर्जः
कार्तिकः सहामार्गशीर्षः तेषुकरग्रहःपरैरन्यैर्वात्स्यपराशरादिभिः उदाहारिउदाहृतः तन्मतंहारिनहरतीतिहारिमनोहारिनचार्वित्यर्थः तत्रहेतुमाह रवे

पुष्यस्तुपुष्यत्यतिकाममेवप्रजापतेरापसशापमस्मात् ४ प्रावृड्वसंतोर्जसहःकरग्रहःपरैरुदाहारिनहारितन्मतं
रवेरवैसारिणमुत्तरायणंपुरंध्रिपाणिग्रहणेपरायणं ५

रितियतोरवेरुत्तरायणंमकरादिषट्कं अवैसारिणंमीनरहितं मीनोवैसारिणो
ऊर्जइत्यभिधानात् पुरंध्रीणांस्त्रीणांपाणिग्रहणेपरायणंअतिश्रेष्ठं अमीनोत्तरायणस्यगर्गादिबहुसंमतत्वाद्दक्षिणायनंतःपातिनांप्रावृडादीनांग्रहणमे
कदेशीयमतेनादरणीयमितिभावः तथाचज्योतिःसारेवात्स्योवर्षमनूनमिच्छतितथारैभ्योयनंचोत्तरंस्त्रीनामाप्ननमृतुंविहायमुनयोमांडव्यशिष्याजगुः
चैत्रंप्रोह्मपराशरःपरिणयेपौषंचदौर्भाग्यदंत्वाषाढादिचतुष्टयंनशुभदंकैश्चिन्नदिष्टंबुधैरिति स्त्रीनामाङ्कऋतुःप्रावृट्शरच्चशौनकस्तुवर्णविशेषेणक्र
तुविशेषमाह परिणयकालःशुभदः शरदिवसंतेचविप्राणांराजन्यवैश्ययोरपिशुभदोग्रीष्मः समुद्दिष्टः घनसमयेशूद्राणांशिशिरेचान्यत्रसंक
रभवानामिति नारदस्तु अप्रबुद्धेहृषीकेशेयावत्तावन्नमंगलमिति शुक्लेकादश्युत्तरकार्तिकंमार्गशीर्षंचविधत्ते अन्येपि नाषाढप्रभृतिचतुष्टं।

मितिवेधविनिश्चय इति यत्तु क्रूरैरपित्यजेत्पादं केचिद्द्रू चुर्मनीषिण इति केषांचिन्मतं यन्नारदादिबहुमतविरोधान्नादरणीयमिति भावः ९ एवं वेध
दोषं निरूप्य दोषांतराण्याह द्रुतविलंबितं यन्नक्षत्रमशुभैः पापग्रहैर्गतगम्यं अधिष्ठितं च अशुभश्च अशुभौ च अशुभाश्च अशुभाः इंद्वैकशेषः एके
न अशुभेन द्वाभ्यां त्रिभिर्वा गतं भुक्तं गम्यं भोग्यं अधिष्ठितं युक्तं यदपि च नक्षत्रं त्रिविधैर्भौमांतरिक्षैरद्भुतैः दूषितं दिव्याद्भुतानि ग्रहसंजनितानि प्रस्य
र्कादीनि भौमानि भूकंपादीनि आंतरिक्षाणि उल्कादीनि एषामन्यतम मद्भुतं यस्मिन्नक्षत्रे जातं यदपि च तरणितारकतः सूर्याधिष्ठितनक्षत्राच्चतु
र्दशं संध्योदितमित्यर्थः तरणेस्तारकं नक्षत्रं तरणितारकं कनीनिकायां नक्षत्रे तारकं तारकेति चेति विश्वः कनीनिका नेत्रतारा तन्नक्षत्रमखिलेपि शुभकर्मणि

8

यदशुभैर्गतगम्यमधिष्ठितं यदपि च त्रिविधाद्भुतदूषितं तरणितारकतोपि चतुर्दशं तदखिलेपि खलं शुभकर्मणि १०
रविनखैर्मितमर्कविधुंतुदौ मुनिभिरिंदुरखंडलमंडलः हुतवहाकृतिषड्जिनदंतिभिः क्षितिसुतादभिलत्तयति ग्रहः ११

विवाहव्रतबंधयात्रादौ खलं पापं स्यादिति प्रत्येकं संबध्यते १० अथ लत्तादोषमाह द्रुतविलंबितं अर्कः सूर्यः विधुंतुद इति व्यथयगतीति विधुंतुदो राहुः तौ र
विनखैर्मितं स्वाधिष्ठितनक्षत्रात्क्रमेण द्वादशविंशतितमं अभिसंमुखं लत्तयतः खंडमेव खंडलं खंडलं भागः छंदश्चेति क्षीरस्वामी न खंडलम खंडलं त
न्मंडलं यस्यासौ तथा संपूर्णमंडलश्चंद्रः मुनिभिः सप्तभिर्मितं अभिलत्तयति एतदुक्तं भवति संपूर्णमंडलश्चंद्रः किल पूर्णिमांते भवति तत्र यन्नक्षत्रं तस्मा
त्सप्तमं चंद्रोभिलत्तयति तच्च कृष्णषष्ठ्यासन्नं सदा स्यादिति हुतवहास्त्रयः आकृतिर्द्वाविंशतिः षट्प्रसिद्धाः जिनाश्चतुर्विंशतिः दंतिनोष्टौ तैस्तुल्यं नक्षत्रं स्वा
धिष्ठितनक्षत्रात्क्रमेण क्षितिसुताद्भौममारभ्य ग्रहः अभिसंमुखं लत्तयति भौमादयः क्रमेण त्र्यादीनि लत्तयंतीत्यर्थः अत्र सर्वेषां संमुखलत्तनमेवोक्तं

अतोभिजित्प्रमाणं तथा विवाहकृत्यादन्यत्र सप्तरेखाचक्रे वेध इत्याह रथोद्धता: वैश्वदैवतमुत्तराषाढाः तस्य चतुर्लवश्चतुर्थोंशः अंतिमः श्रवःश्रव
णस्तस्य पंचभूलवः पंचदशांश आदिमः इयं इह वेधादिविषये अभिजिन्मितिः स्यात् अयमनंतरोक्तो व्यधो वेधः विवाहात्कन्यावरणादिविवाहकृत्या
दन्यतः अन्यत्र सर्वत्र व्रतबंधवास्तुयात्रादिषु सप्तरेखवलये सप्तरेखचक्रे विलोक्यते तथा च श्रीपतिः वधूप्रवेशे दाने चेत्यादि अत्र विवाहपटले अन्य
कृत्योपयोगिवेधनिरूपणाद्वेधादयः सर्वे वक्ष्यमाणा दोषाः साधारण्येन सर्वशुभकृत्येषु ज्ञातव्या इति सूचितं तथा च वस्यतितदखिलेपि खलं शुभक
र्मणीति ८ अथ पादवेधं तद्विषयं चाह द्रुतविलंबितं स अनंतरोक्तो वेधविधिर्द्वितृतीययोश्चरणयोस्तथा आदिचतुर्थयोश्चरणयोर्मिथः परस्प

वैश्वदैवतचतुर्लवः श्रवः पंचभूलवइहाभिजिन्मितिः अन्यतः परिणयात्स्यं व्यधः सप्तरेखवलये विलोक्यते ८ सकि
लवेधविधिर्द्वितृतीयचरणयोर्मिथ आदिचतुर्थयोः अशुभविद्धमशेषमुडु त्यजेच्चरणगं शुभवेधमसंपदि ९ ॥ ॥

रं स्यात् द्वौ च त्रयश्च ते षां पूरणौ द्वितृतीयौ तयोर्द्वितीयतृतीययोरित्यर्थः आदिश्च चत्वारश्च आदिचत्वारः तेषां पूरणौ आदिमचतुर्थयोरित्यर्थः प्र
थमचरणस्थिते ग्रहे विद्धनक्षत्रस्य चतुर्थचरणो विद्धश्चतुर्थस्य प्रथम इत्यर्थः एवं द्वितीयतृतीयावपि किलेति प्रसिद्धार्थे न्यासक्रमेण प्रथमादि
चरणस्थिते ग्रहे तद्वेधाग्रनक्षत्रचतुर्थतृतीयद्वितीयप्रथमाश्चरणाः क्रमेण विद्धाः स्युरिति प्रसिद्धं पादवेधविषयमाह अशुभेति अशुभविद्धं
पापग्रहविद्धमुडु नक्षत्रमशेषं समस्तं त्यजेत् शुभस्य शुभग्रहस्य वेधं चरणस्थितं असंपदि असंपतौ अन्यनक्षत्रालाभे सति त्यजेत् अर्थादन्य
नक्षत्रसंभवे सति शुभविद्धमपि नक्षत्रमशेषमेव त्यजेदिति तथा च श्रीपतिः ऋक्षं सौम्यग्रहैर्विद्धं पादमात्रं परित्यजेत् क्रूरैस्तत्सकलं त्याज्य

स्थितयोश्चंद्रार्कयोरेकरेखागतयोरियं नयनार्गला स्यात् परस्पर दृष्टिपातलक्षणः एकार्गलः स्यादित्यर्थः कथंभूतयोः तुल्यसंगम्यगतयोः ऋक्षयोर्गम्यगते ऋ
क्षगम्यगते तुल्ये ऋक्षगम्यगते ययोस्तौ तथा एकतरस्य यावति नक्षत्रगते तावति अन्यस्य गम्ये सतीत्यर्थः अनेन पादवेधः सूचितः तद्यथा प्रथमचतु
र्थचरणयोरन्योन्यं किल वेधः तत्रैकतरस्य प्रथमचरणस्थस्य पादमात्रं गतमन्यस्य चतुर्थचरणस्य पादमात्रं गम्यं स्यात् एवं द्वितीयतृतीययोरपि तथा च
नारदेन महादोषेषु पठितं खार्जूरिकसमांघ्रिभमेति १४ अत्र शीर्षभतोन्यास उक्तस्तच्छीर्षभं तथैकार्गलफलं चाह रयोद्भृता दुष्टयोगे सति तस्य दुष्टयोगस्य ।
मितिः रूपसंयुता ऽर्धिता सती शीर्षभं भवति शेषमस्याः सा शेषिणी यदि सा शेषिणी भवति तदा सार्धविश्व १३।३० युक् शीर्षभं स्यात् दुष्टयोगाः व्याघातशूल

विद्धात्रयोदश भिरूर्ध्वगतैकरेखा खार्जूरिकं तदिह शीर्षभतो भचक्रे न्यस्ते सहाभिजिति तारकराजभान्वोस्तुल्यसंग
म्यगतयोर्नयनार्गलेयं १४ शीर्षभं भवति रूपसंयुता दुष्टयोगमितिरर्धिता सती शेषिणी यदि च सार्द्धविश्वयुङ्मंगल
गलति सार्गलेविधौ १५ स्यत्काग तेष्यस्य परंतु हेतुमुज्झंति नक्षत्रमशेषमेव एकार्गलस्यैव हि साचभंगी संध्यागतं य
द्गलहस्तयंति १६ ॥

परिघव्यतिपातविष्कंभगंडातिगंडवज्रवैधृताः तत्र व्याघातसंख्या १३ रूपसंयुता १४ अर्धिता जातं ७ शीर्षभं ए
वं शूलादिषु तथा गंडो दुष्टयोगस्तस्य संख्या १० रूपसंयुता ११ अर्धिता ५।३० इयं शेषिणी जाता अतः सार्धत्रयोदशयुता १९ जातं शीर्षभं मूलः ए
वमतिगंडेपि १७ मंगलमिति सार्गले विधौ सति मंगलं गलति अर्गलया वर्तमानः सार्गलः एकार्गलतयोश्चंद्रार्कयोः सतोर्मंगलं नश्यतीत्यर्थः १५ अत्रै
कार्गलविषये परमतमाह इंद्रवज्रा परेऽपीत्यादयः तुल्यसंगम्यगतयोरिति मंगतेष्यस्य हेतुं त्यक्त्वा एकार्गलविद्धनक्षत्रमशेषमेवोज्झंतीत्यजंति

र्वैस्तु चतुर्णां पृष्ठलत्तनं चतुर्णामभिलत्तनं कथमुक्तं तत्र हेतुमाह ११ द्रुतविलंबितं इत्येवंविधे द्युसदां ग्रहाणां अभिलत्तने संमुखलत्तने सति यदनुलत्तनं ऋषिव्रजैर्मुनिसंघैरुक्तं ऋजुमार्गेण सिध्यतोर्थस्य वक्रेण साधना योगादिति न्याये सत्यपि तत् उडुपश्चिमपूर्वविभागयोः नक्षत्रोत्तरपूर्वार्धयोः न्यूनाधिकदोषविवक्षया हेतुना उक्तं एतदुक्तं भवति ग्रहनक्षत्राणि प्राङ्मुखानि संति तत्र पुरः प्रेरिता लत्ता अग्रस्थस्य पृष्ठे लगति पश्चात्प्रेरिता अग्रभागे अतः अग्रलत्तया लातितनक्षत्रस्य पूर्वार्धे अधिकदोषः उत्तरार्धे न्यूनः पृष्ठलत्तया तु पूर्वार्धे अल्पः उत्तरार्धे अधिकः स्यादिति अनेन हेतुना पृष्ठलत्तनं महर्षिभिरुक्तमित्यर्थः ग्रंथकृता तु लत्तितनक्षत्रस्य अखिलस्यापि निषिद्धत्वादभिलत्तनमेवोक्तं १२ अथ लत्तायाः फलमाह द्रुतविलंबितं उडुनि नक्षत्रे शुभग्र

इति सति द्युसदामभिलत्तने पदनुलत्तनमुक्तमृषिव्रजैः तदुडुपश्चिमपूर्वविभागयोरनधिकाधिकदोषविवक्षया १२
उडुनि निर्दलिते शुभलत्तया न फलमस्ति बलस्य गलत्तया अशुभलत्तितमनितरूढयोर्धनसुतानसुतेपकरं परम् १३

हलत्तया निर्दलिते सति तस्य नक्षत्रस्य यद्विहितं शुभफलं तन्नास्ति कया हेतुभूतया बलस्य गलत्तया गलतीति गलत्तस्य भावो गलत्ता तया निर्बलत्वेनेत्यर्थः अशुभग्रहेण लत्तितं यदृक्षं नक्षत्रं तत्र ऊढयोः परिणीतयोर्दंपत्योः परमत्यर्थं असुतापकरं प्राणतापदं मत् धनसुताननि खादयति अशुभलत्तितनक्षत्रे उढाहितयोः प्राणतापो धनसुताश्च नश्यंतीत्यर्थः १३ अथैकार्गलदोषमाह वसंततिलका ऊर्ध्वगता एकारेखा तिर्यक्स्थिताभिस्त्रयोदशरेखाभिर्विद्धा सती खार्जूरिकं नाम चक्रं स्यात् इहास्मिन् चक्रे वक्ष्यमाणशीर्षनक्षत्रमारभ्य सहाभिजिति भचक्रे न्यस्ते सति सह अभिजिता वर्तमानं तत्तथा बहुव्रीहिः प्राग्वत् तारकराजभान्वोश्चंद्रसूर्ययोः कनीनिका यानक्षत्रे तारकं तारकेति चेति विश्वः तारकाणां राजा तारकराजः यद्वाङ्यापोसंज्ञायामिति ह्रस्वः स्वस्वनक्षत्र

श्येत् एतदुक्तं भवति यथा विषप्रदिग्धशरेण विद्धमृगस्य मांसं संस्तत्व्यतिरिक्तं शस्तं तद्वद्यस्मिन्यादे पापवेधः स एव दुष्ट इत्यन्ये वदंति तदयुक्तं यद्य
पि विद्धमृगस्य सतव्यतिरिक्तं मांसं शस्तं तथापि तस्य मृगस्य गतासुत्वमापन्नस्य बलरूपसंपन्नष्टा एवं तस्य पापवेधनक्षत्रस्यापि एवं गलेपादुका।
न्यायेन तेषां स्वपक्षस्यापकपदेनैव मन्हानिरिति अतो यदुक्तं अशुभः विद्धमृशेषमुडु त्यजेदिति तत्सम्यक् १९ अथ चंडायुधदोषमाह उपजाति
का हर्षणादीनां षण्णां योगानां अवसानस्थं यन्नक्षत्रं तस्मिन्नेव नक्षत्रे ऐशं ईषस्य दमे शं चंडमयुग्रअस्त्रं पतेत् चंडीशचंडास्त्रपातः स्यादित्यर्थः तस्म
स्मात् मंगलेति मंगलानां भंगस्तद्वलक्ष्मयस्यतत्तथा मंगलभंजकमित्यर्थः २० अथ चंडायुधसंभवार्थयोगनिर्देशात्तत्राह चर्येण दुष्टयोगानां

विश्लेषमायाति यथासुभिः स्वैरेणः शरेणैकदिशि क्षतोपि तथांघ्रिवेधादपि तारकाणां क्रूरस्य नश्येद्बलरूपसंपत् १९
यदंतगं हर्षणसाध्यशूलगंडव्यतीपातकवैधृतानां तत्रैव चंद्रोडुनि चंडमैशमस्त्रं पतेन्मंगलभंगलक्ष्म २० गं शू वि
वव्यातिषु षट् शरत्रित्रिनंदषड्का घटिकाः क्रमेण ह्यमांत्यजेत्यारिंघमिंदुभान्वोः पर्वण्यतीते दिनसप्तकं च २१ ॥ ॥

वर्ज्यविभागान्तत्प्रसंगेन ग्रहणादुष्टकालं चाह उपजातिका गं गंडः शू शूलः वि विष्कंभः व वज्र व्या व्याघातः अति अतिगंडः एतेषु योगेषु तेषा।
मादिमाः क्रमेण षट् शरत्रित्रिनंदषट्का ६।५।३।३।९।६ घटिकास्त्यजेत् अत्राद्यक्षरग्रहणेनैव नामग्रहणं यथा बृहज्जातके शकुबुकुशुचरा
द्याद्द्वितीवीर्यवंत इति पाास्येद्परिघं आदिमंद्व्यंशं अर्हं त्यजेत् कुत्रचित्र्यंशमिति पाठः स तु बहुवाक्यविरोधान्नादरणीयः इंदुभान्वोः पर्वण्य
तीते सति चंद्रार्कग्रहणानंतरं दिनसप्तकं त्यजेत् २१ ॥ ॐ ॥ ॐ ॥ ॐ ॥ ॐ ॥ ॐ ॥

तेषामयमाशयः हि यस्मात्कारणात्संध्यागतं संध्योदितं नक्षत्रं सर्वमेव गलहस्तयंति परिवर्जयंति सैव भंगीरचनायुक्तिः एकार्गलस्य गलेहस्तेन नो
दयंतीति गलहस्तयंति कल्पादित्वाणिच् यद्वत्संध्यागतं रविणा पादविद्धमपि सर्वमेव त्यज्यते तद्वदेकार्गलस्यम पीत्यर्थः तिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वे द्वंद्व
त्वन्न इतरेतरयोगेपि पृथक्त्वज्ञापकात्सर्वोपि द्वंद्वो विभाषया एकवत्स्यात् अतो गलेष्यस्येत्येकत्वं अथ केचित्क्रूरषड्भांतरितमृक्षमनिष्टमिति विशे
षितश्चांद्रजामित्रे परिणतमित्याह १६ उपजातिका भार्धमंतरं यस्य तत्तथा क्रूरस्य षड्भांतरमृक्षमनिष्टमेवमिति मे न केषांचिद्विशेषवादः विशेषो
क्तिः असौ यस्मात्पापाद्भार्धांतरमृक्षं अस्मात्पापाच्चतुःपंचलवेषु चतुःपंचाशदंशेषु चांद्रं जामित्रं पर्यणंसीत् परिणमति स्म चंद्रजामित्रेण परिणतः

क्रूरस्य भार्धांतरमृक्षमेव मनिष्टमित्येष विशेषवादः पापाच्चतुःपंचलवेषु चांद्रं जामित्रमस्मात्खलु पर्यणंसीत्
१७ सताहते दिग्धशरार्दितस्य शस्तं मृगस्यामिषमेवमन्ये क्रूरांघ्रिवेधायपरं वदंतिते नैव तेषां निजपक्षहानिः १८ ॥

नक्षत्रं हि चंद्रनिष्ठं प्रतिराशौ नवनवमांशाः तस्माद्भार्धांतरे स्थितः क्रूरश्चंद्राच्चतुःपंचाशदंश एव भवति अतः परिणामे चांद्रजामित्रमेवेदमिति कृत्वा
नायं विशेष इति भावः धृभिरमिनम्यानाशंकेतिइट् सगागमश्च १७ अथ केचित्सादवेधे युक्तिरुक्ता तामनूद्य दूषयति उपजातिका विषादिना दि
ग्धेन परामृष्टेन शरेण अर्दितस्य विद्धस्य मृगस्य आमिषं मांसं सताहते क्षतादन्यत्र शस्तं तद्वदत्र पादे वेधः स एव पादो शुभ इति एवमन्ये केचित्क्रू
रांघ्रिवेधायपरं विषयं वद——तिते नैव पदेन तेषां स्वपक्षहानिः स्यात् १८ एतदेव स्पष्टं वक्ति उपजातिका यथैकदिग्ध एकस्मिन् प्रदेशे शरेण
सतो विद्धोपि एणः मृगः स्वैः असुभिः प्राणैर्विश्लेषं वियोगमायाति प्राणवियोगं प्राप्नोतीत्यर्थः तथा क्रूरस्यांघ्रिवेधात्तारकाणां खलरूपयोः संपन्न।

कालेभवेदित्यर्थः ध्रुवेव्यतीपाताख्यः ऐंद्रे वैधृताख्य इति ग्रंथनिर्माणकाले द्वादश अयनांशा आसन् तदभिप्रायेणेदमुक्तं ततोपथा यथा अयनांशा अधिकास्तथा तथा तयोर्योगयोर्न्यूनता चिंत्या तदानयनं श्रीगुरुणा केशवेनोक्तं त्रिघ्नायनांशा नखभाजितास्तद्धीनाश्च सार्धत्रिभुवो द्विपस्राः तत्तुल्यगुसोर्भ तयोर्विलोक्यः पातो व्यतीपातकृद्वैधृताख्य इति चेदिंदुभान्वोः क्रांत्यंतरमानार्धयोगाधिकं तदा एष दोषो न स्यात् चंद्रार्कयोः क्रांत्यंतरं यावन्मानैका धान्न्यूनं तावदेव चायं दोष इत्यर्थः तदानयनं ग्रंथकृता करणकंठीरवे प्रतिपादितं दिङ्मात्रमत्रोक्तं २४ अथ नक्षत्रशुद्धेः प्राशस्त्यमाह द्रुतविलंबितं मृगांकस्य मृगीदृक् तस्या मृगांकमृगीदृशः चंद्रनक्षत्रस्य यदि स्फुरददूषणभूषणकांतयः सुः अदूषणं पापवेधादिराहित्यं भूषणं शुभदृष्ट्यादिकं कां

॥

स्फुरददूषणभूषणकांतयो यदि भवंति मृगांकमृगीदृशः करमवाप्य वरः सुतनोस्तदा शुभरसंभरसंभृतमश्नु
ते २५ इति विवाहवृंदावने नक्षत्रशुद्धिः प्रथमोध्यायः १ अथ कालमीमांसाध्यायः जन्मलग्नमिदम
गमंगिनां मेनिरे मनइतींदुमंदिरं

तिः प्रकाशः अक्षीणत्वादि स्फुरत्स्फूर्तौ स्फुरंतितेताः स्फुरंत्यः परिपूर्णाः ताश्च ता अदूषणभूषणकां तयश्च तास्तथा तदा सुतनोर्वध्वाः करं अवाप्य करग्रहणं कृत्वा वरः भरेण संभृतं परिपूर्णं शुभरसं शुभोपभोगं अश्नुते प्राप्नोति दोषरहिते नक्षत्रे पाणि ग्रहकृद्वरः अतिशुभं प्राप्नोतीत्यर्थः २५ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाह दीपिकायां नक्षत्रशुद्धिप्रकरणं प्रथमोध्यायः १ अथ कालमीमांसाध्यायो व्याख्यायते नक्षत्रशुद्धेर्मुख्यत्वादादौ तामभिधायेदानीं राशिघटितं विवरणं प्रसंगेन तावत्कालमीमांसा निरूप्यते तत्रादौ जन्मराश्यो रेव घटितावलोकनेयुक्तिमाह रथोद्धता अंगमस्तीत्येषामंगिनः तेषां शरीरिणां इदं

अथ ग्रहणादिसंबंधिनक्षत्रदोषमाह शालिनी यस्मिन्नृक्षे नक्षत्रे सैंहिकेयो राहुर्दृश्यते ग्रहणं भवेदित्यर्थः ग्रहणं सर्वोत्पातानामुपलक्षणं यद्यपि चत्रि विधोद्भूतदोषितमित्युक्तत्वात् वाऽस्यथवा तारखेटयोर्भौमादिष्वन्यतमखेटयोर्भेदयोगः स्यात् तत्र नक्षत्रे आषण्मासं षण्मासपर्यंतं लग्नेंदुभाजि लग्नेंदू भजतीति लग्नेंदुभाक्तस्मिन् लग्नेंदुभाजि लग्नस्थे चंद्रे वा सतीत्यर्थः किंचिच्छुभं कर्म भ्राजिष्णु भ्राजते तत् भ्राजिष्णु शोभमानं न स्यात् तद्यथा अश्विन्यां ग्रहणे जाते सत्यंशत्रयोदशभागांतः मेषलग्ने सति अश्विनीलग्नस्य स्यात् एवं भरण्यादिष्वपि चंद्रस्य नक्षत्रमिति प्रसिद्धं उक्तं च व्यवहारतत्त्वे उत्पातैस्त्रिविधैर्दृष्टं ग्रहणगं चाभासषट्कं त्यजेत् इति २२ अथोत्पातादिदोषमुक्तनक्षत्रस्य शुद्धिमाह उपजातिका उत्पातास्त्रिविधाः पापग्रहार विभौमादयस्तैर्मुक्तं तदुत्पन्नदो-

यस्मिन्नृक्षे वीक्ष्यते सैंहिकेयो भेदस्ताराखेटयोर्यत्र वा स्यात् आषण्मासं तत्र लग्नेंदुभाजि भ्राजिष्णु स्यान्नो शुभं कर्म किं-
चित् २२ उत्पातपापग्रहभुक्तमृक्षं पदेंदुराक्रम्य पुनर्भुनक्ति तदा तदृक्षं सकलेषु कर्मसु त्यजेत्समक्रांतितनू रवींद्वोः २३
त्रिभागशेषे ध्रुवनाम्नि चेंद्रे त्र्यंशे गते संप्रति संभवोऽस्य मानार्धयोगाधिकमिंदुभान्वोः क्रांत्यंतरं चेन्न तदैष दोषः २४ ॥

षेत्यक्तं यन्नक्षत्रं तत्तदा एषु सकलेषु शुभेषु कर्मसु अर्हं योग्यं स्यात् तदा कदा यदि इंदुः आक्रम्य पुनर्भुनक्ति दोषत्यागानंतरं चंद्रभोगे जाते सति द्वितीयचंद्रभोगे शुद्धं भवतीत्यर्थः अथैतत्प्रसंगेन पातदोषमाह त्यजेदिति रवींद्वोः समक्रांतितनू सकलशुभकर्मसु त्यजेत् क्रांत्योस्तनू स्वरूपे समे च ते क्रांतितनू च समक्रांतितनू चंद्रार्कयोर्लंबाद्यक्रांती यावत्समे तावत्समतावदित्यर्थः २३ अथ तत्संभवकालमाह उपजातिका ध्रुवनामा द्वादशो योगः तस्मिंस्त्रिभागशेषे तृतीयांशावशिष्टे सति ऐंद्रे षड्विंशे योगे त्र्यंशे गते च सति चकारो वार्थे अस्य क्रांतिसाम्यलक्षणस्य संप्रति इदानीं संभवः स्यात् तदा सन्ने

धौमकरांशगेमकरनवांशस्थितेसति उत्तरायणंकथन्नास्मात् अयनंहि राशिवशादेवनतुनवांशवशादिति प्रसिद्धं अतोराश्योरेवमेलक इति २ अथराशिवशादे
वायनमित्यत्रप्रमाणमाह यस्मात्कारणान्मासषट्कं षण्मासपर्यंतं दक्षिणा दक्षिणस्यांदिशि दक्षिणादात् तद्दितस्यास्ववैविभक्तिरित्यव्ययं आदित्यः सूर्यः एतिग
च्छतितत्तस्मात्कारणात् इति एवंविधमयनंश्रुतिर्जगौजगाद यस्मात्कारणात्सूर्योमासषट्कं दक्षिणांदिशं गच्छतितस्मात्तत्प्रमाणमयनंश्रुतिर्जगादेत्यर्थः एवं
सयुक्तिकमागमप्रमाणमुक्त्वाप्रमाणांतरमाह मूलसंक्रमेति नवांशापेक्षया मूलराशिविवस्वतः सूर्यस्य मूलसंक्रमो राशिसंक्रांतितत्समां तत्सदृशीं ऋतवोव
संतादयोपिस्वस्वभंगिंस्वीयस्वीयरचनांचिन्हमितियावत् बिभ्रतिधारयंति वसंतेषुष्पोद्गमादि ग्रीष्मेनिदाघादि इत्यादीनियान्यृतुचिन्हानितानिरविराशि

12

मासषट्कमयनंचदक्षिणादित्यएतितदितिश्रुतिर्जगौ मूलसंक्रमसमांविवस्वतः स्वस्वभंगिमृतवोपिबिभ्रति ३ किंदिनर्क्षविरहेकर
ग्रहोनेष्यतेतदुदयक्षणेप्यपि स्थूलमेवमखिलजगत्फलं तद्धिषेषयतिसूक्ष्मतागतिः ४

संक्रमवशेष्वुततदृतुषुप्रत्यक्षंदृश्यते अतोराशिवशादे
वमेलक इति सिद्धं ३ अथयुक्त्यंतरमाह र्थोद्धता दिनर्क्षस्यदिवसनक्षत्रस्यविरहेवियोगेसतिकरग्रहनक्षत्रालाभेसतीत्यर्थः तस्यकरग्रहनक्षत्रस्यउदयेक्षणे
पुमुहूर्तेप्यपिकरग्रहः किन्नेष्यते धिष्ण्येतस्मिंतस्यभस्योदयोवेतियस्मिन्धिष्ण्येपश्चकर्मोपदिष्टंतद्देवत्येतन्मुहूर्तेपिकार्यमितिचकथितेपिदिनेनक्षत्रालाभेस
तितदुदयेतन्मुहूर्तेवाकरग्रहोमहद्भिःकथंनेष्यते अपितुनेष्यतइत्यर्थः अतोखिलंसमस्तंजगतःफलंस्थूलमेवमिति एवंचतर्हिसूक्ष्मफलस्यगतिमाहत
द्धिशेषयतीतितत्रस्थूलफलंसूक्ष्मतागतिः सूक्ष्मफलस्यगतिः विशेषयतिविशेषंकरोति सूक्ष्मफलंस्थूलफलस्यसविशेषतांकरोतीत्यर्थः ४ तर्हिसूक्ष्ममेवफ
लंप्रमाणंकथंनस्यादित्याशंकायामाह स्वागताप्रतिवेलंतत्तदूहनविकल्पसमूहैः अव्यवस्थितिःस्यादितिहेतोःमुनींद्राः स्थूलमप्यनुसरंतिकेवलमणीयान

प्रसिद्धं जन्मलग्नं अंगं शरीरं पूर्वमुनयो मेनिरे मन्यंते स्म इंदुमंदिरं चंद्रगृहं जन्मनियश्चंद्रराशिः स मन इति मेनिरे तथा चाहुः शौनकादयः शारीरं लग्न
वशात्सुखदुःखं मानसं शशांकवशादिति हि यस्मात्कारणात्सौहृदं मित्रत्वं मनसो रेव न तु देहयोः नकुलसर्पयोरपि सौमनस्ये सति सहवासित्वदर्शनात्
तस्मात्कारणादयं मेलकः इंदुगेहयोश्चंद्रराश्योरेव स्यात् जन्मराश्योरेव घटितयोगो न तु जन्मलग्नयोरिति सुष्ठु हृदयं यस्य सुष्टु च तद्धृदयं चेति वा तस्य भा
वः सौहृदं भावेऽण् हृदयस्य हृदादेशः पूर्वपदादेर्वृद्धिः यद्वा सुष्टु हृदयं यस्यासौ सुहृत् सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातः सुष्टु च तद्धृच्चेति वा तस्य भा
वस्तया ननु हृद्भगसिंध्वंते पूर्वपदस्य चेति पूर्वोत्तरपदयोर्वृद्ध्या सौहार्दमित्येव स्यात् छंदसि तु महते सौभगायेत्यादयः प्रयोगाः छंदस्येव तत्र सर्वविधी
नां वि[...]कल्पविधानादिति प्रसादकारादयः यत्तु श्रीभागवते न तत्र सौहृदं धर्मसंतोषाभूत सौहृदं इत्यादिषु दृश्यते तदपि संदिग्धं पुराणानामपि छांदस

सौहृदं हि मनसोर्न देहयोर्मेलकस्तदयमिंदुगेहयोः १ चंद्रराशिवशमेव सौहृदं सूक्ष्मयोरपि न किं नवांशयोः एवमस्तु म
करांशगे विधौ कर्कटेऽपि किमनुत्तरायणं २

त्वात् विशेषेण श्रीभागवतस्य अतो भाषायां सौहृदमिति प्रयोगः कथं युज्यते यदि तु ग्रंथकृता प्रयु
क्तस्तर्हि कथंचिद्दृतिमात्रं चिंत्य[...]ते ओर्गुण इत्यनेन संज्ञापूर्वकस्य विधेरनित्यत्वस्य ज्ञापितत्वात् उभयपदवृद्धेरनित्यत्वमिति एवं वसुभेच्चल सौहृदय
त्रिपोईष्या इति वराहोक्तमपि निर्वेदितव्यं ननु चंद्रराश्योर्मेलकस्तर्हि तन्नवांशयोरपि कथं न मेलक इत्याह १ रथोद्धता सौहृदं मित्रत्वं चंद्रराशिवशं चंद्र
राश्यधीनमेवेति यदुक्तं तत्सूक्ष्मयोर्नवांशयोरपि कथं न स्यात् जन्मनि यद्राशौ चंद्रः स जन्मराशिरित्युच्यते तयोश्चेन्मेलको विलोक्यते तर्हि तदंतर्गतयोः
सूक्ष्मयोश्चंद्रनवांशयोरपि कथं न मेलक इत्याक्षेपः अपिः समुच्चये अत्रोत्तरं एवमस्त्विति चेदित्यध्याहारः एवं चेदस्तु भवतु तर्हि कर्कटे कर्कराशिस्थे वि

अवलिप्तवाचां अवलिप्ता उपलिप्ता वाक् येषां ते तथा एवमुक्तवतामित्यर्थः पुरुषाणां हक् दृष्टिः कस्यां निपतेत् समस्यां समाधानं एतु गच्छतु समस्तनं सम
स्याक्यप् एवं सूक्ष्ममुक्तवतां दृष्टेर्न कुत्राप्यवसानमस्ति सूक्ष्मस्य अपर्यवसानादिति भावः ७ एवं सूक्ष्मकालानां कलने सति सिद्धांतमाह इंद्रवज्रा सकिल
कालस्यैकदेशः अत्यंतसूक्ष्मः अतिदुर्लक्ष्यः येन कृत्स्नाखिलानां प्राणिनां फलर्द्धिः फलसंपद्भिदुराभेदनशीला स्यात् भिन्नभिन्नेति यावत् छिदिविदिभिदं
कुरः सः सूक्ष्मकालः अस्मादृशां वयमिव दृश्यंते तेऽस्मादृशः तेषां चर्मचक्षुषां दृग्विषयो दृष्टिगोचरो न स्यात् दुर्ज्ञेय इति यावत् तथा च नारदः स्वस्थे तरेसु
खासीने यावत्स्पंदति लोचनं तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः तत्पराच्छतशो भागस्त्रुटिरित्यभिधीयते त्रुटेः सहस्रभागो यो लग्नकालः स उच्य

13

अत्यंतसूक्ष्मः स किलैकदेशो येनाखिलानां भिदुरा फलर्धिः नास्मादृशां दृग्विषयः स तस्मान्मूलानुकूला व्यवहारसि
द्धिः ८ इति सति यदि मूले सूक्ष्मभावांशलब्धिस्तदखिलमपि सिद्धं नास्ति चेन्मूलसंपत् तदुभयलवनाशो दुर्गम
लारण्यनापरिणतिरिति रूढा कालमीमांसयानः ९ इति विवाहवृंदावने कालमीमांसाध्यायो द्वितीयः ॥ २ ॥

ते देवोऽपि तं न जानाति किं पुनः प्राकृतो जनः स कालोऽप्यन्यकालो वा पूर्वकर्मवशाद्भवेत् निमित्तमात्रं दैवज्ञस्तद्वशाच्छुभाशुभमिति सिद्धांतयतित।
स्यादिति तस्मात्सूक्ष्मकालस्यादृग्विषयत्वात् सर्वजनानां व्यवहारसिद्धिः मूलानुकूला स्यात् मूलस्यानुकूला मूलानुकूला स्थूलानुसारिणी वत्सरमा
रभ्य नवांशपर्यंतमित्यर्थः असमत्साध्यत्वात् अथानयोः स्थूलसूक्ष्मयोः समाधानमाह ८ मालिनी इत्यनंतरोक्ते सति मूले स्थूलमध्ये यदि सूक्ष्मभावा
वांशलब्धिर्लाभश्चेत्स्यात् तत्तदाखिलं सर्वमपि सिद्धं फलितं स्यात् एवं स्थूलं तदंतर्गतं सूक्ष्मं च विलोकनीयमित्युक्तं अन्यथा बाधकमाह नास्तीति चे

योनरमणीयमित्यन्वयः वेलांवेलांप्रतीतिप्रतिवेलं वीप्सार्थेऽव्ययीभावः तस्यास्तस्या वेलाया ऊहनंवितर्कस्तस्यविकल्पास्तद्रूपाः तेषांसमूहास्तैः कृत्वा
अव्यवस्थितिरव्यवस्थास्यादितिहेतोर्मुनीन्द्रागर्गादयः स्थूलंफलंवर्षमासतिथ्यादिकमप्यनुसरंति तत्रप्रवर्त्तंते केवलमणीयःसूक्ष्मतरंफलंनरमणीयंरम्यं
त् अतिशयितमणु अणीयः सूक्ष्मफलस्यानवस्थानात्स्थूलेष्वपिप्रवर्त्ततइतिभावःएतदपिस्पष्टयिष्यति ५ एवंचेत्तर्हिसूक्ष्मफलमकिंचित्स्यात्तत्राह स्यागता
द्धविष्टधिष्ण्यावर्तमानअयंभूयान्बहुतरोजनः जातावेकवचनं एकधिष्ण्य दिनजोपिएकनक्षत्रतिथिजातोपिभिन्नफलभाक्विसदृशफलभागीभवतीति
मत्यस्तं तेनकारणेनसूक्ष्मतापिगरिष्ठागरीयसीस्यात् अपिःसमुच्चये तर्हिस्थूलंत्याज्यंस्यात्तत्राह साचेति साचसूक्ष्मता मूलंस्थूलंअनुरुध्यअनुसृत्यविधे

अव्यवस्थितिरितिप्रतिवेलंतत्तदूहनविकल्पसमूहैः स्थूलमप्यनुसरंतिकृतीन्द्राःकेवलंनरमणीयमणीयः ५ भिन्न
भिन्नफलभाग्भुविभूयानेकधिष्ण्यदिनजोपिजनोयं सूक्ष्मतापिनतुतेनगरिष्ठासाचमूलमनुरुध्यविधेया ६ सूक्ष्मो
नवांशाद्द्विरसांशएवत्रिंशल्लवस्तल्लवतोपिसूक्ष्मः ततोपिलिप्तेत्यचलिप्तवाचांदृगोतुकस्यांनिपतोसमस्या ७ ॥ ॥

यास्यात् स्थूलानुसारेणसूक्ष्मतापिग्राह्येत्यर्थः ६ कथंस्थूलमनुरुध्यसूक्ष्मताग्राह्येत्येतदर्थंसूक्ष्मतायाअनवस्थानंप्रकटयति उपजातिकासूक्ष्मयोरपिन
किंनवांशयोरितिनवांशःकिलसूक्ष्मउक्तः नवांशादपिद्विरसांशोद्वादशांशःसूक्ष्मःद्वौचरसाश्चतेःअंशाःआद्वौद्यंशाःततस्तस्मात्रसांशइतिकृत्वाद्वादशांश
एवसिद्धःयथासूर्येनदेहंततस्त्यादायुर्मासादिकंस्फुटमित्यादिषुसूर्येहृतंसन्नंदहृतमितिव्याख्यायतेनतुद्वादशाधिकनवशतैस्तद्वदत्रापि अतएवबृ
हज्जातके चंद्रोपगद्विरसभागसमानरूपमिति तल्लवतस्तस्माद्द्वादशांशादपित्रिंशल्लवस्त्रिंशांशःसूक्ष्मः ततोपिलिप्ताकलासूक्ष्मा इती त्यनेनप्रकारेण

मं अतो न पंचमनवमः सख्यविधिः अत्रान पत्यतेति फलमपि सूचितं द्विषतिशत्रौ सति आयुर्नैवस्यात् शत्रुसांनिध्ये कथमायुरिति शत्रुः षष्ठं आयुर
ष्टमं अतोष्टमषष्ठो न सख्यविधिः अत्रनायुष्यमिति फलंच अर्थाच्छेषाश्चतुर्दशमतृतीयेकादशोभयसप्तमाः शुभाः एकराशित्वे विशेषं वक्ष्यति १ अथा
स्यापवादं तारामैत्रं चाह स्वागताप द्वासेत्रयोराश्योः सुहृदभिन्नपतित्वं हृश्यते तत्तदा अखिलेषु द्विर्द्वादशादिषु अपि मेलः सख्यं स्यात् मेलनं मेलः किं
पुनः शुभेषु चतुर्थदशमादिषु सुहृदौ अभिन्नौ च सुहृदभिन्नौ तौ च तौ पती च तयोर्भावस्तत्वं पत्योः सुहृत्वं एकत्वं चेत्यर्थः राश्यधिपास्तत्सुहृत्वं च व
क्ष्यति तथा चोक्तं नवर्णशुद्धिर्न गणो न योनिर्द्विर्द्वादशे चैव षडष्टकेपि वरेपि दूरं यदि वा त्रिकोणे मैत्री यदि स्याच्छुभदो विवाह इति अथ तारामैत्रं भीरु

हृश्यते सुहृदभिन्नपतित्वं सेत्रयोस्तदाखिलेष्वपि मेलः भीरुभाद्दचलपंचतृतीयाशोकवैरविपदे वरतारा २ नक्षत्र
मेकं यदि भिन्नराश्योरभिन्नराश्योर्यदि भिन्नमृक्षं प्रीतिस्तदानीं निविडा नृनार्योश्चेत्कृत्तिका रोहिणि वन्ननाडी ३

भादिति भीरुः स्त्रीविशेषास्त्वंगनाभीरुः कामिनीवामलोचने स्यभिधानात् तस्यानक्षत्रमारभ्य वरतारा वरनक्षत्रं अचलपंचतृतीयाक्रमेणशोकवैर
विपदे स्यात् हृहृ कत्वं क्लीबत्वं अचलाश्च पंच च त्रयश्च तेषां पूरणी तथा सप्तमी पंचमी तृतीया चेत्यर्थः सप्तमी शोकाय पंचमी वैराय तृतीया विपदे इति
एतत्त्रयमनवके एव पुनर्द्वितीये तृतीयेपि केचिदेवमशुभयुग्माभ्यामपीच्छंति तथा चाहुः पुंस्त्र्याद्गणयेद्यावत्कन्यर्क्षं कन्यभादपि वरभं नवहृत्क्लेश
ताराः संति परस्परमिति एतदन्यदेशेषु प्रसिद्धं ग्रंथकृतोक्तं तद्देश एव २ अथैकनक्षत्रे एकराशौ च विशेषमाह उपजातिका यदि नृनार्योर्वरव
ध्वोः भिन्नराश्योः सतो नक्षत्रमेकं भवति अथवा अभिन्नराश्योः एकराश्योरपि भिन्नमृक्षं स्यात् अपि वार्थे तदा निविडा अतिशयिता नृनार्योः प्रीतिः

मूलं संपत्स्य स्थूललब्धिर्नास्तितरांतदुभयलवनाशः स्यात् तस्य फलजातस्योभयलवौ स्थूलसूक्ष्मलक्षणौ यौ विभागौ तयोर्द्वयोरपि नाशः स्यात् कस्मात् अणू
नामति सूक्ष्माणां दुर्गमत्वात् दुःखेन गम्यंते ज्ञायंते तानि दुर्गमाणि तेषां भावस्तत्त्वं तस्मात् अतो नवांशपर्यंतसूक्ष्मकालस्य मनुष्यगम्यत्वात्तत्सर्वं
तेस्थूलांतर्गतं सूक्ष्मं विचारणीयमिति सिद्धं अतो नवांशयोरपि मेलकः स्यादिति नवांशमेलकस्य जनैर्व्यवहारेनासीत्येतत्त्प्रपंचं वक्ष्यति एतदुक्तं म
यामनसि समाहितमित्याह परिणतिरिति इतीयं कालमीमांसया कालविचारणेन नोस्माकं परिणतिः रूढा स्फुरिता कालस्य मीमांसा विचारणं मानतेस्या
र्थेस न ततः प्रत्ययात् ताङ्गावेअच् कालविचारणे क्रियमाणे अस्माकमयं बुद्धि परिणामो रूढ इत्यर्थः १ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरा
त्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां कालमीमांसाध्यायो द्वितीयः २ एवं प्रसंगिकं कालमीमांसनं निरूप्य अधुना प्रकृतं

अथ मेलकाध्यायः व्ययेन वित्तं न तपस्य पत्यं नायुर्हि षत्येव वधूवराणां द्विर्द्वादशः पंचनवाष्टषष्ठो जन्मर्क्षयोः
सख्यविधिर्नदृष्टः १ ॥

मेलकाध्यायं निरूपयति तत्रादौ राशिमेलकं सोपपत्तिकमाह उपजातिका वधूवराणां स्त्रीपुरुषाणां जन्म
र्क्षयोर्जन्मराश्योर्द्विर्द्वादशः सख्यविधिः ‾‾‾‾‾ मैत्रविधिर्नदृष्टः नलक्षितः पूर्वमुनिभिः द्वौ च दश च द्विद्वादश तयोः पूरणो द्विर्द्वादशः एकस्य राशेः स
काशादन्यराशिर्द्वितीयस्तस्मादप्यन्यो द्वादश इत्यर्थः अत्र हेतुः व्ययेन वित्तमिति यतो व्यये सति वित्तं न स्यात् व्ययो द्वादशस्थानं वित्तं द्वितीयं यत्र व्यय
स्तत्र कुतो धनमिति अनेनैवात्र दरिद्रत्वमिति फलं च सूचितं भवति एवं तपसीत्यादि हेतुना पंचनवेत्यादि पंच च नव च अष्ट च षट् च पंचनवाष्टषट्
तेषां पूरणः पंचनवाष्टषष्ठः पंचम नवमोष्टमषष्ठ इत्यर्थः तपसि सति अपत्यं न स्यात् तत्र ब्रह्मचर्यादिनियमविधानात् तपो नवमस्थानं अपत्यं पंच

र्य्येतस्मिन्सति अयंभर्त्ताऽतद्धीनेयंभार्येति सर्वव्यवहारोगार्हस्थ्या दिरूपोनसंभवतीति अतएकांशकत्वे सौमनस्यंनस्यादितिभावः ५ अथना
डीवेधमाह वसंततिलका रुद्रआर्द्रा अर्यमाउत्तराफाल्गुनी इंद्रोज्येष्ठा वरुणःशततारका एतानिचत्वार्यारभ्यप्रत्येकंद्वयं एवमष्टौ अश्विनीचएका
किनीएवमेकोनवकः विश्वेउत्तराषाढा अग्निःकृत्तिका वायुःस्वाती फणीआश्लेषा एवद्वारभ्यप्रत्येकंयुगंयुग्मंएवमष्टौ अंत्यभंरेवतीच एकाकिनीएव
द्वितीयोनवकः शेषाणि पूर्वाफाल्गुनीचित्राधनिष्ठा भरणी मृगपूर्वाषाढानुराधापुष्योत्तराभाद्रपदाः अयंतृतीयोनवकः इतिनवकत्रयंस्यात् वधूवरयो
र्जन्मोडुनीजन्मनक्षत्रेएकपातेएकस्मिन्नवकमध्येप्राप्तेतदानाडीस्यात् किमर्थं वरवधूनिधनायद्वयोरेकनाड्यांमृत्युःस्यादित्यर्थः अत्ररुद्रादिदेवता

रुद्रार्यमेंद्रवरुणद्वयमश्विनीचविश्वाग्निवायुफणिनांयुगमंत्यभंच शेषाणिचेतिनवकत्रयमेकयातेजन्मोडुनी
वरवधूनिधनायनाडी ६ प्रमीयमाणापिमतेमुनीनांत्रिद्व्यंघ्रिनक्षत्रभुवःकुमार्याः नाडीचतुःपंचतयस्यपक्षोन
सोद्वीयोविषयत्वमेति ७

निर्निर्देशेनतन्नक्षत्रनाड्यादिगृह्यते लोकेहिस्वामिशब्दंसेवकेप्रयुंजानादृश्यंते अतोदेवताशब्दस्तन्नक्ष
त्रतिथ्यादिषूपचर्यते तथाविधद्वन्द्वप्रयोगदर्शनाच्च नागोद्वादशनाडीभिर्दिक्पंचदशभिस्तथाभूताष्टादशनाडीभिर्दूषयत्युत्तरांतिथिमित्यादिनागः
पंचमी दिग्दशमी भूतश्चतुर्दशीति ६ अथत्रिनाडिकाचक्राभिप्रायेणनाडीवेधउक्तः केचित्तुत्र्यंघ्रिभद्व्यंघ्रिभोत्पन्नकन्यायाश्चतुःपंचनाडीचक्रेवेधमाहुः
तन्मतंदूषयति उपजातिका त्रयश्चद्वौच अंघ्रयोयस्यत्रिद्व्यंघ्रितच्चतन्नक्षत्रंतत्र भवतीतित्रिद्व्यंघ्रिनक्षत्रभूस्तस्याः कुमार्याः क्रमान्नाडीचतुःपंचतयस्य
चत्वारश्चपंचचतुःपंचतेवयवायस्यत्वच्चतुःपंचतयं नाडीचतुष्टयंनाडीपंचकंचेति संख्यायाअवयवेतयप् तस्यपक्षः मुनीनांहारीतादीनांमतेःप्र

15

स्यात् तत्र नाडीदोषोपि नास्तीत्याह चेत्कृत्तिकेति चेत्कृत्तिकारोहिणिवत्तदा नाडी न स्यात् यथा कृत्तिकारोहिण्योरेकनाडीत्वेपि एकराशौ सति नाडीदोषो न स्यादित्यर्थः अनेनैव गणदोषोपि निरस्तः एवं शततारकापूर्वाभाद्रपदादिष्वपि तथा च गर्गः एकराशिं विना नाडीयोगमादौ विवर्जयेत् न दोषस्त्वेकराशिस्थे भकूटे त्वेषु मृत्युदः इति भृगुरपि दंपत्योरेकराशिश्चेत्पृथग्धिष्ण्यं यदा भवेत् वसिष्ठोक्तो विवाहः स्याद्गणनाडीं न चिंतयेदिति एतद्गुरुमतमुक्त्वा मतांतरमाह ३ उपजातिका एकौ च तौ ऋक्षराशी च तौ तथा एकनक्षत्रे एकराशौ एकसत्यपीति अपिः संभावनायां नवांशभेदान्नक्षत्रचरणभेदात्सौमनस्यं सुहृत्वं पराशरः प्राह एकनक्षत्रे एकराशावशुभमिति बहुमतं प्रागुक्तं तत्रापि चरणभेदे सति शुभमिति पराशरमतमित्यर्थः तत्राप्येकांशत्वे चरणैकत्वेपि

पराशरः प्राह नवांशभेदादेकर्क्षराश्योरपि सौमनस्यं एकांशकत्वेपि वसिष्ठशिष्यो नैकत्र पिंडे किल नाडिवेधः ४
नाग्निर्दहत्यात्मतनुं यथा हि द्रष्टा स्वदृष्टिं न हि दर्शनीयः एकांशकत्वेपि समप्रभावान्न भर्तृभार्याव्यवहारसिद्धिः ५

वसिष्ठशिष्यः सौमनस्यं प्राह एतद्दूषयिष्यति अत्र नक्षत्रैक्ये नाडीदोषो नास्तीत्याह नैकत्रेति द्वयोरपि नक्षत्रयोरेकत्र एकस्मिन् स्थाने पिंडे गोलके सति किल निश्चयेन नाडिवेधो न स्यात् द्वयोर्व्यवहितयोः सत्येव वेधः स्यादेकत्वे तु न स्यादिति भावः नाडिरिति इकारांतः कृदिकारादक्तिन इति ङीबंतोप्यस्ति ४ अथ नाडीदोषाभावेत्र दृष्टांतमाह उपजातिका यथा हि अग्निः आत्मतनुं स्वमूर्तिं तेजोरूपां न दहति अपि च दर्शनीयो रमणीयः पुरुषः स्वदृष्टेः द्रष्टा न स्यात् कर्मणि षष्ठी चक्षुष्मानपि द्रष्टा स्वदृष्टिं न पश्यतीति तथा एकत्र पिंडे नाडीवेधो न स्यादिति पूर्वेणान्वयः अथैकांशकत्वे दोषमाह एकांशकत्वे इति एकांशकत्वे चरणैकत्वे सति तु भर्तृभार्याव्यवहारसिद्धिर्न स्यात् कुतः समप्रभावात् समानसामर्थ्यात् अयं भावः नृनार्योरेकांशकत्वात्समानसाम

शिवयमर्क्षे आर्द्राभरण्यौ अयंनक्षत्रनवकोनरिमनुष्येभवेत् श्रुतिः श्रवणः स्वातीप्रसिद्धामित्रोऽनुराधा अदितिः पुनर्वसुः गुरुःपुष्यः करो हस्तः अंत्यं रेवती
अश्विनौ अश्विनी शशिभं मृगशिरः अयंनवकः सुरे देवेभवेत् परंचित्राज्येष्ठाधनिष्ठाविशाखामूलकृत्तिकाशततारकामघाश्लेषाइतीदंनवकंदैत्येभवेत्
एवंगणत्रयं अस्यप्रयोजनमाह मृत्युरिति इत्तुजमनुजानां राक्षसमनुष्याणां मृत्युः नरनायोः रक्षोमानुषगणयोः सतो मृत्युः स्यादित्यर्थः निर्ऋतितनयानां राक्षसा
नां अनिमिषैर्देवैः सहस्वैरमति शपितं वैरं स्यात् क्वपरिणयेविवाहे अर्थाच्छेषाणां मित्रत्वं ९ अथस्वाभाविकं राशिवैरं तथावश्यमैत्रं चाह शार्दूलविक्रीडितं चा
पाजौ धनुर्मेषौ वृषभेणसह नित्यद्विषौ नित्यविरोधिनौ चापेन अजेन वा सह वृषभो नित्यंशत्रुरित्यर्थः एवमुत्तरत्रापि कुंभमिथुनौ कर्केण मेषस्त्रिया कन्यया

परं दैत्यमृत्युर्दनुजमनुजानामनिमिषैः सहस्वैरं वैरं निर्ऋतितनयानां परिणये ९ चापाजौ वृषभेण कुंभमिथुनौ कर्केण मेषस्त्रि
याशैलाग्नीसविषेणि कार्मुकहरीनक्रेणानित्यद्विषौ तद्वत्कुंभतुलेझषेणवशगाः सिंहंविनान्येनृणां तद्वज्ज्याजलचारिणोहरिव
शाः सर्वेविनावृश्चिकम् १०

शैलाग्नीतुलामिथुनौ सविषेण वृश्चिकेन शैलाग्नीइत्यत्रसंख्यासंज्ञयातत्संख्यौराशीविवक्षितौ अतोनबहुत्वं यथा
निगमवाक्ये युग्माग्नियुगभूतानां षण्मुन्योर्वसुरंध्रयोरिति षण्मुन्योः षष्ठीसप्तम्याः वसुरंध्रयोरष्टमीनवम्याः एवमत्रापि कार्मुकहरी धनुःसिंहौ नक्रेणम
करेण तद्वन्नित्यद्विषौ कुंभतुले झषेणमीनेन एतद्द्विद्वादशषडष्टकयोर्मध्येनित्यवैरिणउक्ताः शेषाणां मैत्रं अत्रान्यहेतुमाह शत्रूमंदसितौ इत्यादिसत्या
चार्यमतेयद्धिपत्योः शत्रुत्वमस्तितएवैतेपठिताः शेषाः श्रेष्ठाः तथा चतद्वाक्यम् द्विद्वादशेमेषझषौ वृषमिथुनावित्यादि षडष्टकेचासिंहौमीनयुतइत्या
दिग्रंथकारस्तुसत्याचार्यमतमैत्रमसहमानोमुंहेतुं परित्यज्यराश्योरेववैरंनित्यद्विषावित्यनेनावदत् नतुतदधिपतिवशेनेतिग्रंथकारस्याशयः अथव

मी पृमाणोपिप्रमाणंप्राप्नुवन्नपिआगमप्रामाण्यंप्राप्तोपि सोद्वीथीविषयत्वंस्रोदस्यवीथीपदवीतस्याविषयत्वंविचारमार्गगोचरत्वंनैतिनगच्छतित्र्यं
घ्रिभंकृत्तिकादिकं द्व्यंघ्रिभंमृगशीर्षादिकं तथाचहारीतः त्र्यंघ्रिभे द्व्यंघ्रिभे कन्याजातापाणिपेक्ष्मात् वन्हिभादिंदुभान्नाडीचतुःपंचसुपर्वस्विति अस्यावि
षयमाह हृद्गर्गः जांगलेचचतुर्मालापांचालेपंचमालिका त्रिमालासर्वदेशेषुविवाहेऋषिसंमतामिति एवंस्रोदेक्रियमाणेसपस्रोत्रदेशेव्यवहारंनप्राप्ने
तीत्यर्थः ७ अथयोनिमैत्रमाह स्रग्धरा अश्वस्तुरगः इभोहस्ती अजोमेषः उरगः सर्पः पुनरहिः सर्पः श्वाशुनकः स्वनृकरिपुर्मूषकशत्रुर्मार्जारः मेषअ
जः पुनरोतुर्मार्जारः हिः द्विवारं आखुर्मूषकः गौर्धेनुः कालीमहिषीव्याघ्रः प्रसिद्धः पुनः कालीमहिषी पुनः पशुरिपुर्व्याघ्रः हरिणोमृगः पुनरेणोमृगः पुनः

अश्वेभाजोरगाहिश्वस्वनकरिपवोमेषओतुर्हिराखुर्गौकाल्यौव्याघ्रकालीपशुरिपुहरणोणश्वकीशाः क्रमेणद्वौत्र
भूकीशासिंहौतुरगमृगपतिछागमातंगमेवंनेष्टायोनिःसवैरावरयुवतिनृपामात्ययोरश्विनीतः ८ त्रियुग्मौरो
हिण्यासहार्शिवयमर्क्षौनैरिसुरेश्रुतिस्वातीमित्रादितिगुरुकरास्याश्विशशिभं

कीशोवानरः सींहः प्रसिद्धः तुरगोश्वः पुनर्मृगप
तिः सिंहः छागोमेषः पुनर्मतंगोहस्ती द्वंद्वेकत्वेक्लीबत्वं एवंक्रमेण अश्विनीतः अश्विनीमारभ्ययोनिः स्यात् सायोनिःसवैरानेष्टाकयोः वरयुवतिनृ
पामात्ययोः वरश्चयुवतिश्चवरयुवतीचनृपश्चअमात्यश्चनृपामात्यौ वरयुवतीचनृपामात्यौचतयोः पृथक्पृथक्द्वित्वविवक्षायांनबहुत्वंअश्वि
नीतइत्यत्र तसिलादिष्वाकृत्वसुचइत्यनेनपुंवद्भावेप्राप्ते उक्तपुंस्कत्वाभावान्नस्त्रीप्रत्ययलोपः अत्रयोन्योर्वैरंलोकाद्ज्ञेयं गोव्याघ्रंगजसिंहमित्या
दिना ८ अथगणमैत्रमाह शिखरिणी त्रयाणांयुग्मानांसमाहारस्त्रियुग्मी फल्गुनीद्वयंआषाढद्वयंभाद्रपदाद्वयंचेतिरोहिण्यासहरोहिणीचेत्यर्थः

दर्शनमुक्तं तत्तत्फलार्थमेव वास्तवं तु ग्रहेश्वराणां किमदृष्टमस्तीति अतः कारणात्प्रभुसख्यंस्वामिमैत्रमेवाधिकमिति चेत् तदा समसप्तकस्य कुंभसिं
हाविव्यादिकस्य का गतिरुक्तः प्रश्नोंगमनिका कथ्यतामिति १३ सिद्धांतरूपां गतिमाह उपजातिका स्वभावमैत्र्यादिषु चतुर्षु मध्ये पूर्वपूर्वंगमे पूर्वपूर्वाल
भेसति परः परः उत्तरोत्तरः गवेष्यः अन्वेषणीयः आदौ राश्योः स्वभावमैत्री समसप्तकादौ का विलोक्या तदलाभे स्वपत्योः तद्राश्यधिपयोः सखिता तस्य ग्र
हसख्यस्यालाभे वशित्वं राश्योर्वश्यत्वं वश्या — लाभेन्योन्यं भयोनक्षत्रयोर्योनिशुद्धिः योनिवैराभावः चेत् युगपद्युतिश्चतुर्णामपि लाभस्तदा हस्ते त्रि
वर्गीस्यात् त्रिवर्गो धर्मकामार्थैरित्यमरः धर्मादयः करगताः स्युरिति एवं पूर्वपूर्वस्यैकस्य अलाभे सति उत्तरोत्तरलाभे न तदपवाद उक्तः चतुर्णामपि।

17

स्वभावमैत्रीसखितास्वपत्योर्वशित्वमन्योन्यभयोनिशुद्धिः परः परः पूर्वगमे गवेष्यो हस्ते त्रिवर्गी युगपद्युतिश्चेत् १४
आपार्श्वकेंद्रद्वयगाः प्रसूतौ तत्कालमित्राणि — मिथः स्वपांथाः न्यूनामपि स्त्रीनरभत्यराज्ञां तत्कालसख्यं विशिनष्टि
मैत्रम् १५

लाभेतिशुभं त्रयाणां द्वयोर्वा लाभे तारतम्यं कल्प्यं १४ अथ स्वाभाविकग्रहमैत्रस्यापि तत्कालसख्येन न्यूनाधिकतामाह इंद्रव
ज्रा प्रसूतौ जन्मकाले यस्माद्ग्रहात्पार्श्वयोः केंद्रद्वयं पार्श्वकेंद्रद्वयं तन्मर्यादीकृत्यैतत्पार्श्वकेंद्रद्वयं तत्र गच्छंतीति आपार्श्वकेंद्रद्वयगाः स्वपांथाः ग्रह
स्वे आकाशे पथ्यं तिगच्छंतीति स्वपांथाः तेन ग्रहेण सार्धं मिथो मित्राणि स्युः एतदुक्तं भवति जन्मकाले यस्मिन् राशौ यो ग्रहः स्थितस्तस्मात्पृष्ठवर्ती केंद्र
द्दशमस्थानं भवति अग्रतश्चतुर्थं तदवधित्वेन तदंतर्वर्त्तिस्थानानि दशमैकादशद्वादशद्वितीयतृतीयचतुर्थानि एषन्यतमस्थाने स्थितौ ग्रहौ तौ
तत्कालं मिथो मित्रे स्तः अन्ये तु शत्रव इति तथा च वराहः तत्कालेन दशायबंधुसहजस्वांत्येषु मित्रं स्थित इति प्रसूतिग्रहणं तत्कालसख्यस्य जा

तकशास्त्रोक्तेः अतोन्यत्रापि तद्विलोक्यमिति ज्ञेयं तदेवाह न्यूनामपि स्त्रीनरौ च भृत्यराजानौ च तेषां स्त्रीनराणां भृत्यराज्ञां च ग्रहवशेन या स्वाभाविकी मै
त्री तां एतत्तत्कालसख्यं विशिनष्टि विशेषयति कथंभूतामपि न्यूनामपि किंपुनः संपूर्णां तथाहि स्वाभाविको यो मित्रं समः शत्रुर्वा स चेत्तत्काले मित्रं भवति तदा
क्रमेणाधिमित्रं मित्रं समः स्यात् चेत्तत्काले शत्रुस्तदा समः शत्रुरधिशत्रुरिति १५ अथ वर्णमित्रमाह इंद्रवज्रा षट्कर्माणि यजनयाजनादीनि षट्कर्माणि तानि येषां ते षट्कर्मा
णः विप्राः तेषां शासितृ देवदैत्यौ अधिपौ स्तः शासिताः शिक्षिताः देवदैत्या य्याभ्यां तौ गुरुशुक्रावित्यर्थः राजन्यानां क्षत्रियाणां समूहो राजन्यकं तस्याधिपती कुजा
र्कौ स्तः विट्शूद्रयोः क्रमेण चंद्रबुधौ विशां चंद्रः शूद्राणां बुध इति संकीर्णानां संकरभवानां निषादादीनां पतिः शनिः स्त्रीनृषु वधूवरेषु वर्णमैत्री स्यात् तद्यथा

षट्कर्मणां शासितृदेवदैत्यौ राजन्यकस्याधिपती कुजार्कौ विट्शूद्रयोश्चंद्रबुधौ शनिश्च संकीर्णपः स्त्रीनृषु वर्णमैत्री १६
सुरगुरुर्जगुरुकविकोविदौ विरवयो विकुजाविरवींदवः अशशिसूर्यकुजाः सुहृदो रवेर्यवनयुक्तिरियं नयवीयसी १७ ॥

श्याधिपयोर्वर्णौ विलोक्यौ तत्रोत्तमवर्णः पुरुषः शस्तः समवर्णो मध्यः हीनवर्णोधम इति एतदुक्तं ग्रंथकर्तास्वदेशप्रसिद्धेः अन्यदेशे तु मीनाद्ब्राह्मणपूर्वो
वर्णाः कन्योत्तमो वरः श्रेष्ठः मध्यस्थः समवर्णो नीचो हीनो द्रवः पुरुष इति इयं वर्णमैत्री केवलं गुणमात्राय न तु मेलकं निर्णयाय अतो मेलकनिर्णयानंतर
मेवोक्ता १६ एवं राशिकूटमुक्त्वा तदुपयोगि ग्रहमैत्रं जातकोक्तमत्राह एते द्वारभ्य श्लोकाष्टकं द्रुतविलंबितं रवेः रविमारभ्य सतेसुहृदः सुः अर्थादन्ये श
त्रवः रवेः सुरगुरुर्मित्रं अन्ये शत्रवः चंद्रस्य बुधगुरू मित्रे शेषाः शत्रवः भौमस्य शुक्रबुधौ मित्रे अन्ये शत्रवः बुधस्य रविव्यतिरिक्ताः मित्राणि रविः शत्रुः गुरोः
कुजव्यतिरिक्ता मित्राणि कुजः शत्रुः शुक्रस्य रवींदुव्यतिरिक्ता मित्राणि रवींदू शत्रू शनेः शशिसूर्यकुजव्यतिरिक्ता मित्राणि शशिसूर्यकुजाः शत्रवः इ

यं यवनाचार्याणां युक्तिर्नयवीयसी नकनिष्ठा स्थूलदूरमुवेति यवाः देशाः यवनाचार्यमतमिदं महदित्यर्थः १७ कथमिदं महदिति संस्थापयति विरोचनः सू
र्यः मिहिरोपि सूर्यः अतो वराहमिहिरः इदं यवनमते निजमते बृहज्जातकाख्ये यंउल्कापिन दूषितवान् पुनर्वाक्यालंकारे अन्यमतं स्वमते नहि निवे
श्य यदि निवेशितं दूषितव्यं तर्हि नोचेत्तर्हि तत्स्वमतमेवेति न्यायविदः वदन्ति च अतः कारणात्स वराहः इदं ग्रहमैत्री शास्त्रं यवनेषु यथा तथ्यं सत्यं ब
हु अतिशयितं जयति सर्वोत्कर्षेण वर्तत इति मन्यत एव वराहोपि यवनशास्त्रं याथार्थ्येन अतितरां मन्यत एवेत्यर्थः १८ एतदेव भंग्यंतरेणाह यस्मात्कार
णात्स्वमते स्वमतमध्ये निवेशितं निक्षिप्तं परमतं यदि न दूषितं तदा तन्मतं आदृतं स्वीकृतमेवेति न्यायविदः तत्तस्मात्कारणात् नूनमित्यहं तर्के इतीति

इदममुदीर्यं वराह विरोचनो निजमतेपि न दूषितवान्पुनः स बहु मन्यत एव यथातथ्यं जयति शास्त्रमिदं यवनेष्वपि १८ पर
मतं स्वमते विनिवेशितं यदि न दूषितमादृतमेव तत् कलितकेवलसत्यमतः स तद्यवनयुक्तिषु नूनमनिस्पृहः १९ किमबहु
त्वमयं मिहिरो दिशन् ग्रहसुहृत्वमिदं जगदे हृदि उभयथापि समं सतितन्मते मतिकेपि भवेम वयं यतः २०

कथं स वराहः कलित
केवलसत्यमतः कलितं लक्षितं केवलं साकल्येन सत्याचार्यस्य मतं येन स तथा यवनपंक्तिषु यवनाचार्यवचनेषु अनिः स्पृहः निर्गतः स्पृहां निस्पृहः न
निस्पृह अनिस्पृह इति वराहोपि सत्याचार्यमतं सम्यगालोच्यापि यवनमतस्पृहयत्येवेत्यहं तर्के इत्यर्थः १९ एवं चेत्तर्हि वराहो यवनमते अल्पमत
त्वं कथमुक्तवानित्याशंक्याह अयं मिहिरो वराहमिहिरः इदं यवनोक्तं ग्रहसुहृत्वं ग्रहमैत्रमादिशन्सन्बहुत्वं अबहूनां मतमिति हृदि मनसि किंज
गृहे धृतवान् यवनग्रहमैत्रमुत्का केषांचिदेवं मतमिति कथयंउक्तवानित्यर्थः तथा वयं बहूनां नो नो नो न तु धीः सितेंदुतनयौ व्यकौ विभौमाः क्रमाद्दीं हृकौ

तकशास्त्रोक्तेः अतोन्यत्रापि तद्विलोक्यमिति ज्ञेयं तदेवाह न्यूनामपि स्त्रीनरौ च भृत्यराजानौ च तेषां स्त्रीनराणां भृत्यराज्ञां च गृहवशेन या स्वाभाविकी मै
त्री तां एतत्तत्कालसख्यं विशिनष्टि विशेषयति कथंभूतामपि न्यूनामपि किंपुनः संपूर्णां तथाहि स्वाभाविको यो मित्रं समः शत्रुर्वा स चेत्तत्काले मित्रं भवति तदा
क्रमेणाधिमित्रं मित्रं समः स्यात् चेत्तत्काले शत्रुस्तदा समः शत्रुरधिशत्रुरिति १५ अथ वर्णमित्रमाह इंद्रवज्रा यजनयाजनादीनि षट्कर्माणि तानि येषां ते षट्कर्मा
णः विप्राः तेषां शासितदेवदैत्यौ अधिपौ स्तः शासिताः शिक्षिताः देवदैत्या याभ्यां तौ गुरुशुक्रौ चित्यर्थः राजन्यानां क्षत्रियाणां समूहो राजन्यकं तस्याधिपती कुजा
र्कौ स्तः विट्शूद्रयोः क्रमेण चंद्रबुधौ विशां चंद्रः शूद्राणां बुध इति संकीर्णानां संकरभवानां निषादादीनां पतिः शनिः स्त्रीनृषु तु पूर्वरेषु वर्णमैत्री स्यात् तद्यथा

षट्कर्मणां शासितदेवदैत्यौ राजन्यकस्याधिपती कुजार्कौ विट्शूद्रयोश्चंद्रबुधौ शनिश्च संकीर्णपः स्त्रीनृषु वर्णमैत्री १६
सुरगुरुर्ज्ञगुरुकविको विदो विरवयो विकुजा विरवींदवः अशशिसूर्यकुजाः सुहृदो रवेर्यवनयुक्तिरियं न यवीयसी १७ ॥

श्वधिपयोर्वर्णौ विलोक्यौ तत्रोत्तमवर्णः पुरुषः शस्तः समवर्णो मध्यः हीनवर्णोधम इति एतदुक्तं ग्रंथकृता स्वदेशप्रसिद्धेः अन्यदेशेतु मीनाद्ब्राह्मणपूर्वो
वर्णाः कन्योत्तमो वरः श्रेष्ठः मध्यस्थः समवर्णो नीचो हीनो हीनोद्भवः पुरुष इति इयं वर्णमैत्री केवलं गुणमात्राय नतु मेलकनिर्णयाय अतो मेलकनिर्णयानंतर
मेवोक्ता १६ एवं राशिकूटमुक्त्वा तदुपयोगि ग्रहमैत्रं जातकोक्तमत्राह एतेदारभ्य श्लोकाष्टकं द्रुतविलंबितं रवेः रविमारभ्य एते सुहृदः सुः अर्थादन्ये श
त्रवः रवेः सुरगुरुर्मित्रः अन्ये शत्रवः चंद्रस्य बुधगुरु मित्रे शेषाः शत्रवः भौमस्य शुक्रबुधौ मित्रे अन्ये शत्रवः बुधस्य रविव्यतिरिक्ताः मित्राणि रविः शत्रुः गुरोः
कुजव्यतिरिक्ता मित्राणि कुजः शत्रुः शुक्रस्य रवींदुव्यतिरिक्ता मित्राणि रवींदू शत्रू शनेः शशिसूर्यकुजव्यतिरिक्ता मित्राणि शशिसूर्यकुजाः शत्रवः इ

मत्र किंतु कुर्वंत्स्ययोग्यं बहुवर्गणाभिः आचार्यकृतं तु बहुघ्नतो यामेकं तु यद्भूरि तदेव कार्यमिति अत्रैवं मतभेदे सति सत्योपदेशो वरं तर्हि किंतु अन्ये सत्तुंगच
क्रवर्गोत्तमस्वगृहादिगते ग्रहे सति बहुवर्गणाभिर्यदायुः कुर्वंति तदयोग्यं अनवस्थादोषप्रसंगादिति भावः आचार्यस्य कर्म आचार्यकं तस्य भावः आचार्य
कत्वं आचार्यस्य सत्याचार्यस्यायमभिप्राय इत्यर्थः बहुवर्गणायां प्राप्तायां सत्यां यदेकमधिकं वर्गणं तदेव कार्यमिति तद्यथा उच्चगतस्य उच्चगुणो रूपत्र
यं वक्रगतस्य चेष्टागुणोपि रूपत्रयं तत् घातमूलं स्फुटगुणोपि रूपत्रयं वर्गोत्तमस्वगृहादिगते आश्रयगुणोपि रूपत्रयासन्नः तत्स्फुटगुणयोर्घातमूलं
कर्मगुणोपि रूपत्रयं अतः उच्चवक्रवर्गोत्तमस्वगृहे द्रेष्काणादिगतेपि सकृत्त्रिगुणमित्येव अतो वराहेण गर्गसत्यादिमतानुसारेण यदुक्तं तद्युक्तियुक्तं ब
हुमतं चेति अतो ग्रंथकृता बहुतरैः कृतमेवेत्यादि यदत्रोक्तं तन्न विचारणीयमिति एवं राशिसख्यं प्रसंगेनोक्त्वा इदानीं नवांशसख्यस्यापि ग्राह्यत्वं प्रतिपा

१९

अभिद्रुरावधिपौ स्रजतः शुभं शशिनवांशकयोरिति देवलः तदपि चारु न चारुषितैर्मुखैर्व्यवहरंति तथा वितथाशयाः २२

दितत्वात्तत्कथं नोक्तं तद्विषयमाह २१ जन्मकाले शशिनवांशयोः स्वं द्वंद्वगतनवांशयोः अभिद्रुरौ नभिद्रुरं यतोस्तावभिद्रुरौ सुहृदौ भिदेर्भावे कुरच् अधिपौ शु
भं स्रजतः कुरुत इति देवलो मुनिः प्राह तदपि चारु रमणीयं पतत्काल — मीमांसयैव प्रतिपादितं तयातेन प्रकारेण जनाः वितथाशया न व्यवहरंति वि
तथमसत्यमाशयो येषां ते तथा असत्याभिप्रायाः कैः आईषत् रुषितैः कुपितैर्मुखैः अयुक्तं मनसि स्वीकृत्य किंचित्कुपितमुखैर्न व्यवहरंतीत्यर्थः यद्वा अवि
तथाशयाः यथार्थमनोभावाः मनस्येवमेवास्ति परंतु तादृशैर्मुखैस्तथा न व्यवहरंति लोके अप्रसिद्धिभयादिति भावः २२ एवं देवलादिमते सत्यपि ये
नवांशसख्यव्यवहारं न कुर्वंति तेषामनिष्टमाह ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥

विकुजैरवश्वसुहृदः केषांचिदेवं मतमिति अतो यवनमैत्रमबहुसंमतमिति वराहस्याभिप्राय इति भावः अत्रोत्तरं उभयथेति तन्मते तस्य वराहस्य मते म
हति पृथुतरे सति उभयथा उभयपक्षेपि समं तुल्यं स्यात् यतो यस्मात्कारणादयं केचनकेपि भवेमस्यामा वराहमतं महच्चेत्तर्हि वपमपि महांतो भवामेतुभय
त्रे समं उभयोरपि मानुषत्वादिति भावः २० एतन्निरस्य पुनः संस्थापयति सकृतीकुशलो वराहः बहुतरैर्भूयिष्ठैर्यत्कृतं तदेव अनुससर्त्ति अनुसरति बहुम
तानुसारमेव वक्तीत्यर्थः सृगतौ अयं धातुपाठे वैदिकधातुपाठे वैदिकधातुष्वेव बव्हादिषु पठितः भाषायां तु भ्वादिष्वेव अतोनुससर्त्तीति छंदस्येव घटते
भाषायां तु सरतीत्येव यङ्लुकि तु ससर्त्तीति तस्मादयं कविप्रमाद एव अतोत्रेदं पठितव्यं अनुससार तदप्ययथातथमिति इति चेत्तदपि अयथातथं सत्यं
न भवति अत्र हेतुः पृथगिति यतः पृथगपि द्विगुणे त्रिगुणे प्राप्ते सकृत्त्रिगुणमिति यदुक्तं सा अबहूक्तिः अबहूनामुक्तिः सा यथा वर्गोत्तमस्वराशिद्रेक्काणना

बहुतरैः कृतमेव कृती स चेदनुससर्त्ति त[द]प्ययथातथं पृथगपि द्विगुणे त्रिगुणे सकृत्त्रिगुणमित्यबहूक्तिरियं यतः २१

वांशके सकृद्द्विगुणं वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वं सकृत्त्रिगुणमिति वर्गोत्तमादिष्वन्यतमगते वक्रोच्चयोरन्यतरगते च ग्रहे सति तस्यायुषः पृथग्द्वि
गुणस्य त्रिगुणस्य च प्राप्तौ एकवारमेव त्रिगुणत्वं ह्यायुः कार्यमिति वराहेण यदुक्तं तन्न बहुसंमतमतो वराहोक्तमपि न बहुसंमतमिति भावः तथा चोक्तं क
ल्याणवर्मणा बहुताडनसंप्राप्तौ यां करोत्येकवर्गणा वराहमिहिराचार्यः सा न दृष्टा पुरातनैरिति अतो वराहोपि बहुसंमतमेव वक्तीति न किंतु कदाचित्स्वम
नोरुचिनमपि वक्तीत्यतो यवनोक्तग्रहमैत्रविषये केषांचिन्मतमिति वराहेणोक्तेपि तद्वाक्यस्याप्रामाण्याद्यवनोक्तमेव ग्रहमैत्रं महदित्यर्थः एतन्न वांशत्विं
ताया जेनापि सम्यक् संस्थापयिष्यति एतद्ग्रंथकृतः स्वपक्षस्थापनार्थं पांडित्यमात्रं वास्तवं नैतदिति वयं ब्रूमः यत उक्तं वराहेण बृहज्जातके सत्योपदेशो वर

यनोबुधः नैतच्चतुरस्रं अनंतरापत्ये फक् अविधानात् केचिदपत्यमात्रेपि अणादीनिच्छंतितद्दपिनानडादिषु पाठात् द्यग्द्विधानादर्शनाच्चद्याणवंसंति तस्येदमित्याद्यपिनिरस्तं पतुमायश्चित्तस्मृतौ चांद्रायणमितिप्रयोगः तदेवंभ्युत्यादितं चंद्रस्य अयनमिवायनंचरणंयस्मिन्कर्मणितच्चांद्रायणंसंज्ञायांदीर्घः एवंसोमायनादिअतोग्रंथकृता अनंतरापत्येचांद्रमासायन इतिप्रयुक्तस्यगतिमात्रंचिंत्यतेचंद्रमसइदं चांद्रमसं अयनंउत्पत्तिस्थानंयस्यासौचांद्रम सायनोबुधः तौगुरुबुधौयदिसमवैरिणौस्तः तत्तदावरपतिंवरयोर्वरवध्वोः पतिंवृणुतेसापतिंवरा संज्ञायांभर्तृवृजिधारिसहितपिदमइतिखःखि त्वान्मुम् इष्टफलेषुशुभफलेषुफल्गुतानिःफलतास्यात् सतदुक्तंभवति लग्ननवांशःकिलवरस्यस्थानं तत्सप्तमांशोवध्वाः अतस्तदधिपयोर्मैत्रेस



वरपतिंवरयोः समवैरिणोयदितदिष्टफलेष्वपिफल्गुत १ तदुदयद्विपदांशनियामकोयवनसौहृदमाद्रियतांज
नः इतरथाकथमस्तुकरग्रहस्तनुफलहिलवानवलंबतः २

तितयोःशुभंतत्रयदालग्नेधनुरंशःतदासप्तमेमिथुनांशः अनयोर धिपतीगुरुबुधौतौसत्याचार्यमतेशत्रूसंदसितावित्यादिनामिथः समवैरिणौभवतः अतोत्रवरवध्वाः शुभंनस्यात् तस्माद्धनुरंशोनग्राह्यइत्यनि ष्टप्राप्तं १ अतो यवनमैत्रंग्राह्यमित्याह तत्तस्मात्कारणाज्जनः यवनसौहृदंयवनोदितमैत्रमाद्रियतांस्वीकुरुतांदृगतौ तुदादिःकर्तरिलोट्सौहृदमि त्यस्यगतिः प्राग्वत् कथंभूतोजनः उदयद्विपदांशनियामकः उदयेलग्नेद्विपदांशोनरराश्यंशास्तंयच्छतीतयाकर्तरिखुण् लग्नेद्विपदांशस्वीकारंनियम मिवनमैत्रंग्राह्यमित्यर्थः अन्यथात्वेदोषमाह इतरथेति इतरथाद्विपदांशानंगीकारेकरग्रहः कथमस्तु अपितुमास्तु तत्कथंहियस्मात्कारणात्तनुफ लंलग्नफलंलवान् अवलंबतेआश्रयतेलवाधीनंलग्नफलमितिअयंभावः लग्नफलंनवभागेइत्युक्तत्वान्नवांशोमुख्यःसचद्विपदएवभाव्यःतथाचोक्तं प्रा

येरैवविदः करग्रहे लग्नदृशं विना लवदृशा नवांशदृष्ट्यैव फलममंसत लुङ्. मन्यंते स्म ते पि शशिनवांशसखित्वे पराङ्मुखाः किं स्युः तथाहि उदयगत
नवांशः स्वेशदृष्टयुतो वा न भवति यदि मृत्युः स्यात् इदानींतु वरस्य तस्या हीनेनवांशदृष्ट्यैव लग्नफलं मन्यते लग्नफलं नवभागे इत्यंशस्य मुख्यत्वात् तस्य
वमेलकार्थं चंद्रनवांशयोः सख्यं कथं न मन्यंत इति तेषामनिष्टं अथैदमलं मस्तु दूरं तिष्ठतु तत्कथं जगदिदं गतानुगतं गतमनुगतं गतानुगतं गतानुगतिको
लोकोन लोकः पारमार्थिक इति कश्चिदित्यज्ञानाद्व्यवहरत् तथैवान्यस्तदूदन्योपीत्यंधपरंपरावदिति भावः २३ इतिश्रीसकलागमाचार्यश्रीकेश
वसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां मेलकाध्यायस्तृतीयः ३ अथ सूक्ष्मं लग्नादिफलं विवक्षुस्तावन्नवांश

लवदृशैवहि लग्नदृशं विना फलममंसत येपि करग्रहे शशिनवांशसखित्वपराङ्मुखाः किमलमस्तु गतानुगतं जगत २३
इति विवाहवृंदावने मेलकाध्यायस्तृतीयः ३ अथ नवांशचिंताध्यायः नवलवाधिपतौ उदयास्तयोरनिमिषार्चितचांद्र
मसायनौ

चिंतां निरूपयति तत्रादौ करग्रहोक्तनवांशोपपत्तिव्याजेन यवनोक्तग्रहमैत्रं संस्थापयति तथाहि लग्नं किल भर्तृस्थानं त
त्सप्तमं जायास्थानं तन्नवांशश्चैतयोः सेरव्ये वरवध्वोः सख्यं अतस्तत्सप्तमयोरुदयांशास्तांशयोः स्वामिवशात्सख्ये सति वधूवरयोरपि
मैत्रं स्यात् अतो येषां नवांशानामेवं घटते त एव नवांशास्तुलाधरादयः पूर्वैः पठितास्ते च यवनोक्तग्रहमैत्रस्यैवस्वीकारात् घटंते अतो यवनोक्तमेव
ग्रहमैत्रं प्रमाणमिति सिद्धांतमनसि मत्वा पूर्वोत्तरपक्षौ रचयति नवलवेत्यादिनाष्श्लोकषट्केन अत्राध्याये सर्वाणि द्रुतविलंबितानि उदयास्तयोर्ल
ग्नतत्सप्तमगतयोर्नवलवयोरधिपती अनिमिषार्चितचांद्रमसायनौ यदि स्तः अनिमिषा देवाः तैरर्चितः बृहस्पतिः चंद्रमसोनंतरापत्यं चांद्रमसा

रणेतरप्रतुलाभृतो हि अस्त्यांशो मेषः तयोस्तुलामेषयोरेकतरस्तुलाधरः असौ द्विचरणः शुभभंचास्ति अतस्तुलांशो गृहीत इत्यर्थः अन्योतरं अंगेत्यप्यपसंबो
धनेहे तव ईरितं उक्तमिदमसंगतमघटमानं कस्मात् किल यस्मात्कारणाज्जगति लोके एकवशात्सौहृदं नास्ती सौहृदं हि उभयगतो धर्मः स चैकस्मिन्नेवनघ
टते अतएकतरो गृह्यते इति यदुदीरितं त्वयानतदंगमिति ईरितमत्र भावेक्तः तवेवेति शेषविवक्षायां षष्ठी सौहृदमित्यस्यसंगतिः प्राग्वत् एवं सर्वविकल्पा
न्परिहृत्य परिशेषात्फलितं सिद्धांतमाह ५ खचरयोरुदयांशास्तांशस्वामिनोः सुखितामित्रत्वं कारणं वक्तव्यं विकल्पांतराणां निरासात्तायदिकारणं स्यात्त
र्हि सा सखिता यवनाध्वनि यवनमार्गे नितरां अतिशयेन ध्वनति शब्द्यायते यवनशास्त्रे प्रसिद्धेत्यर्थः सत्याचार्यमते तु तयोर्मैत्र्यभावात् अतो यवनमैत्र

द्विचरणः शुभभंचनवांशकः स्तद्द्वयमेकतरः परिगृह्यते इदमसंगतमंगात वेरितंजगति नैकवशात्किल सौहृदं ५ ख
चरयोः सखितायदि कारणं ध्वनितस्मान्नितरां यवनाध्वनि कलशसिंहनवांशपशत्रुता परिणमत्युभयोरपि शास्त्रयोः ६
अथातयोः समसप्तसुहृत्त्वयः कथमसूक्ष्मगतिः सचनैकधा

मेवप्रमाणमितिभावः ननु कुंभांशपरित्यागः सत्याचार्यमते वैरसद्भावादि
ति चेत्तत्राह कलशेति कलशसिंहौ चतौ नवांशौ च उदयास्तनवांशौ तौ पातस्तौ तस्यौ तदधिपती तयोः शत्रुता वैरत्वं उभयोर्द्वयोरपि शास्त्रयोः परिण
मति परिपाकं प्राप्नोति शनिसूर्ययोर्वैरं यवनशास्त्रे सत्यशास्त्रेप्यस्ति अतो यवनमते शत्रुत्वसद्भावात्कुंभांशस्त्यक्तः ननु सत्यशास्त्रे वैरसद्भावादिति भावः
एवमंशेग्रहमैत्र्यादिकं विचार्यते तर्हि राशावपि कथं नावलोक्यत इत्याशंकां परिहरति ६ अथानंतर्ये हि यस्मात्कारणात्तयोर्यवनसत्यशास्त्रयोः समसप्त
सुहृत्त्वयः कथमसूक्ष्मगतिः अपितु सूक्ष्मगतिरेव समाप्यते सप्त च समसप्तः सुहृदां पंथाः सुहृत्पथः ऋक्पूरं पथामित्यप्रत्ययः समसप्तानां सुहृत्पथः समस

ल्लग्नेद्विपदग्रहाकुर्यादन्यांशकोदयोनाशमिति अतोद्विपदांशादन्यनवांशेवरवध्वोर्नाशविधानात्क्रूरग्रहः कथंस्यात् अतोद्विपदांशनियमेसति उदयाम्नां
शाधिपयोर्मैत्र्याभावस्तथाचधनुर्द्वरांशेयवनोक्त्यालभ्यते अतोयवनोक्तमेवग्रहमैत्रं भाद्विपतामिति २ अत्राप्यन्यस्याशंकामनूद्यदूषयति अथप्रकारान्तरं अथ
उभयसप्तमौनारपूस्तःसमसप्तकयोःसदाराशिमैत्री अस्त्येव चतुर्दशमवत् अतोधनुर्मिथुनयोर्मैत्रंसदास्तीति यदीदंतदाकलशस्यद्विपदतां नरतांदधतोविभ्रतो
ष्ययशः अशुभत्वंकिमागतंकुंभेहि उत्तरार्धेमनुष्यः उदयास्तांशयोः सदासमसप्तकत्वान्मैत्रं अतः कुंभांशः कथंनगृहीत इति अत्रोत्तरं अशुभसतेति अशुभसे
नापापग्रहभवनत्वंकुंभोहिपापग्रहभवनमतोनोक्तइति अत्रप्रत्युत्तरं एवंचेत्तर्हि वृषानिमिषौ वृषमीनौ किमुपेक्षितौ कथंपरित्यक्तौ वृषमीनौ सौम्यभवनत्वे

अथरिपूयदिनोभयसप्तमौतदयशःकलशस्यकिमागतं द्विपदतांदधतोयशुभसंसतायदि वृषानिमिषौकिमुपेक्षितौ ३ अ
मनुजावितिचेत्किमुशौनकोनवलवंझषमाहतवान्मुनिः शुभग्रहद्विपदास्तलवः सचेद्भवतुतत्रकिमस्तुतुलाभृतः ४

पिकथंत्यक्ताविति ३ अत्रोत्तरप्रत्युत्तराणि तौवृषमीनौ अमनुजौमानुषौनभवतः तदुदयद्विपदांशनियामकइत्युक्तत्वात् इतिचेत्तर्हि शौनकोमुनिर्झषंमी
नंनवलवंकथमाहतवान् स्वीकृतवान् प्रहसितवदनाचमीनांशइति मीनोहि जलचरः कथंशौनकेनगृहीत इति अत्रोत्तरं समीनः शुभग्रहद्विपदास्तलवः शु
भग्रहद्विपदश्च अस्तलवोयस्यसतथा मीनस्यास्तांशः कन्या असौशुभग्रहद्विपदश्च अतोमीनांशः शौनकेन आहतइति अत्रप्रत्युत्तरं इतिचेत्तर्हितुलाभृतः
किमस्तु तुलाधारस्यहि अस्तलवोमेषः सशुभग्रहद्विपदश्चनभवति अतः कस्मात्तुलाधरः स्वीकृत इति ४ अत्रोत्तरप्रत्युत्तरे यद्येवमुक्तंलग्नानतर्हि अयमेक
लग्नेनवांशोद्विचरणः शुभभंचपरिगृह्यते उदयनवांशास्तनवांशयोरेकतरोनवांशोमनुजः सौम्यग्रहंचगृह्यते नतुद्वावपीत्यस्मात्कमाशयः द्वयोरेकस्यानिर्धा

स्तांशयोरेकतरस्ताद्दशांशग्रहणात् इति चेत्तदपि न जगति नैकवशा किल सौहृर्दमिति त्वयैवोपन्यस्तत्वात् अथ चेत्तवेदमभिप्रेतं उदयहि पदांशनियामक इति तदपि न ज
गति नैकवशा किल सौहृदमिति त्वयैव स्मारितत्वात् अस्तांशोपि हि पदोभाव्यः अथ परिशेषात्माग्लग्ने हि पदग्रहात्कुर्यादन्यांशको दयो नाशमित्यागमबलादिद
मित्येव वक्तव्यं तर्ह्यस्माकं फलितं मनोभिलषितं आगम एव कथं तुलांशादिषु कारणं तत्त्वीकर्तव्यः किमर्थं कारणांतरं ग्रहमैत्रं कल्पनीयं कल्पनालाघवात् शौन
केनमीनांशस्य अमनुजत्वेपि स्वीकाराच्च अतो नवांशोत्त्या यवनमैत्रशास्त्रस्य संस्थापनेन न संयुज्यते किमनेन नवलवाधिपतौ इत्यादिना ग्रंथसंदर्भेण अत एव वरा
हः ज्योतिषमागमसिद्धं विप्रतिपत्तौ न योग्यमस्माकं स्वयमेव विकल्पयितुं किंतु बहूनां मतं वस्य इति अतो वराहेण यवनमते केषांचिदेवं मतमित्युक्तं सत्योक्तं ग्रहमैत्रं बहु
मतमतः सर्वजनेषु प्रसिद्धतरं यवनमैत्रं त्वेकदेशीयमतो महद्भिरुपेक्षितं किमर्थमत्र ग्रंथकृतोभिनिवेशः किमपराद्धं च सत्यादिभिः उच्यते ग्रंथकृद्भिः स्वगो

लवपतिः कुरुते लवलग्नयोः पतिमतिं त्रिवसुव्ययवित्तगः नवलवास्तपतिः प्रतिहंत्यसून्मृगदृशश्च तदस्तभयोस्तथा ९

त्वार्थं किंचित्पूर्वं वक्तव्यं तथैवमहतामप्युक्तिः किं विदूषणीयेत्यलं बहूक्त्या अथैषामप्यंशानां विशेषमाह अस्तपतीति अस्तोस्तांशः तस्य पतिस्तस्यापि हि पन
शत्रुः सईश्वरो यस्य नवांशस्य स तथा उदयास्तांशाधिपयोस्तात्कालिकशत्रुत्वे स नवांशस्त्याज्य इत्यर्थः तुलादिशुद्धि उदयास्तांशाधिपयोः स्वाभाविकशत्रुत्वाभा
वात् विशेषांतरमाह बलवंध्येति बलेन वंध्यः पतिर्यस्य नवांशस्य स तथा यस्यांशस्य पतिस्थानादिबलैर्यदि हीनः तदा तमपि त्यजेदित्यर्थः ८ अथोदयास्तशुद्धि
माह लवपतिः लवलग्नयोस्त्रिवसुव्ययवित्तगः पतिमतिं कुरुते अंशाधिपतिरंशाल्लग्नद्वा तृतीयाष्टमद्वादशद्वितीयस्थितो भर्तृमतिं कुरुत इत्यर्थः इयमुदयशु
द्धिः अथास्तशुद्धिः नवलवेति नवलवास्तं सप्तमं तस्य पतिः तदस्तभयोर्लवलग्नयोरस्तभे सप्तमभवने तयोः तथा तद्वत् त्रिवसुव्ययवित्तगः मृगदृशो वधा

समुहृत्य यः वरवधूस्थानराश्योः सदा समसप्तकत्वादुभयमतेपि समसप्तकराश्योर्मैत्रत्वमार्गः सूक्ष्म एवेत्यर्थः स च सुहृत्य यः एकधा एकप्रकारो नास्तित त्वात्स मैत्राद्वैरपि सद्भावात् उक्तं हि स्वं नामपीत्यादिना ततस्मात्कारणादिहास्मिन्विवाहे अखिलैः यवनादिभिः सत्यादिभिश्च खलखेटगृहाणि पापग्रहभवनानि मेषसिंहादीन्यपि लग्नगतानि अनुमेनिरे अनुज्ञातानि अपिः संभावनायां पापभवनान्यपि शुभानि किं पुनः शुभभवनानीत्यर्थः ७ अथ प्रकृतस्य सिद्धांतमाह इत्युक्तहेतुभिः सिंहं तुलाजितुमप्रमदाधनुः प्रथमखंडं सततमनवरतं अखंडफलं पूर्णशुभफलं दं जगुर्यवनाद्यः तुला प्रसिद्धा जितुमो मिथुनः प्रमदा कन्या धनुः प्रथमखंडं धनुषः पूर्वार्द्धं द्वैकत्वं नखंडफलं यस्य तत्तथा तथा हि धनुः पूर्वार्धं कुभोत्तरार्धं मिथुनतुलाधरकन्याद्विपदाः किलोक्ताः तत्र धनुषोस्त्यांशो मिथुनः तत्स्वामिनो गुरुबुधयोर्यवनमते मैत्रं अतो धनुरंशः शुभः एवं मिथुनांशोपि तुलायां अस्त्यांशो मेषः तत्स्वामिनोः कुजशुक्रयोः यवनमते मैत्रमतस्तुलांशः कुंभः

इह हि लग्नगतान्यनुमेनिरे तदखिलैः खलखेटगृहाण्यपि ७ इति तुलाजितुमप्रमदाधनुः प्रथमखंडमखंडफलं जगुः सत
तमस्तपतिद्विषदीश्वरं न बलवद्बलवं ध्यपतिं त्यजेत् ८

कन्यायां अस्त्यांशो मीनः तत्स्वामिनोर्गुरुबुधयोर्यवनमते मैत्रमतः कन्यांशः शुभः कुंभस्यास्त्यांशः सिंहः तत्स्वामिनोर्मैत्राभावात्कुंभांशो न शुभः अत एव नवांशाः शुभा अखिलैरुक्ताः तथा चाहुः प्राग्लग्ने द्विपदगृहात्कुर्यात् कन्यांशकोदयोनांशो द्विपदेष्वपि कन्यातौलिमिथुनधन्वंशकाः शस्ता इति अयं ग्रंथकर्तोभिप्रायः सप्रपंचं मया वर्णितः परमार्थिकत्वे तदर्वाचीनानां नयनावपी मात्रं तद्यथा यत्वया सिद्धांतितं तुलादिषूक्तनवांशेषु उदयास्त्यांशाधिपयोः खचरयोः सखिताकारणमिति तर्हि मेषांशः तदधिपयोः सत्यपि मैत्रके यत्त्यज्यते अशुभः स्यात् इति चेत्तन्न वृषांशस्यसत्यपि मैत्रे त्यागात् अमनुजत्वादिति चेत्तर्हि शौनकेन मीनांशः कथमादृतः शुभग्रहद्विपदास्तलवः स चेन द्विपिन तर्हि तुलांशः कथमाद्रीयत इति त्वयैवोच्यते उदया

ति अपितु अवयविन्यवलोकितेपि कदाचिदवयवो प्यदृश्यतां स्पृशत्येवेति द्वौ नौ प्रकृतार्थं ब्रूतः दृष्टेप्यवयविनि कदाचित्कश्चन तदवयवो नदृश्यत इत्यर्थः
तत्तस्मात्कारणाद्दमन्तु केवललग्नदृशां नमता केवलालग्नदृग्ये षां तेषां मतं तन्न अतर्कसहं अपितु तर्कसहमेव तर्कसहं तेन तर्कसहं वयं समुपास्महे अनुसरा
मः ये षां केवललग्नदृष्टिर्न संमता अपितु उभयदृक् संमता तेषां मतं तर्कसहं तद्वयं मन्यामहे इत्यर्थः यदुक्तमुभयदृक् फलदेतित त्र केवललग्नदृष्टिं मन्यमानः प
र आक्षिपति ११ ननु इत्यहो इह विवाहे अंशपति र्लग्नविलोकने सति निजनवांशं कलयति पश्यति तस्य लग्नात त्वात् अन्यथात्वे अनिष्टमाह यमवलोकयत इति
नवांशपतिर्यं नवांशमवलोकयते स यदि तनोः सकाशात्पृथगस्ति तदा तद्दिष्टफलाय तस्य लग्नस्य इष्टफलतवापि संमतं तत्तस्मै जलांजलिः स्यात् जलांजलिदानंम

ननु नवांशकमंशपतिर्निजं कलयतीह विलग्नविलोकने यमवलोकयते स तनोः पृथग्यदि तदिष्टफलाय जलांजलिः १२
अपृथगस्ति स एव ननु पश्यता तनुमसावधिपेन निरूपितः हृदयहारदृशैवमृगीदृशः प्रणयिनां तरलस्तरलद्युतिः ॥ १३ ॥

तस्यैव अतो लग्नफलं गतमेवेत्यर्थः तनुफलं हि लवानबलं बले इतित वापि संमतं नवांशाधिनें लग्नफलमितित स्य मज्जनमेव स्यादिति अनिष्टप्रसंजनं १२ अत्राप्य
निष्टमुभयदृष्टिं मन्यमानः स्वयमाह ननु अहो स नवांशश्चेत् अपृथगस्ति लग्नांतर्गत एवास्ति तदा तनुं लग्नं पश्यता अवलोकयता अधिपेन लग्नस्वामिना अ
सौ नवांशो निरूपितो दृष्ट एव स्यात् रूप अवलोकने चुरादिः केनक इव प्रणयः प्रीणनं तद्स्यास्तीति प्रणयी प्रियः तरलो हारमध्यमणिः कथंभूतेन प्रणयि
ना मृगीदृशः अंगनाया हृदयहारदृशा हृदये हारस्तं पश्यतीति हृदयहारदृक् तेन तया कथंभूतो मध्यमणिः तरलद्युतिः तरला चंचला द्युतिर्यस्यासौ तथा मि
ये णांगनाया हारे दृष्टे सति तदंतर्गतो मध्यमणिर्दृष्ट एव भवति तथा लग्नं पश्यता तदधिपेन तदंतर्गतो नवांशोपि दृष्ट एवेत्यर्थः अतो नवांशपतिना नवांशो दृष्ट

असूक्ष्माणामप्रतिहंतिनवलवात्सप्तमाधीशो नवांश सप्तमाल्लग्नसप्तमाद्वा त्रिवसुव्ययवित्तगस्तदा वधूं हंतीत्यर्थः ननु पूर्वैर्यवनादिभिर्नवांशाधीशस्य नवांशदृ
ष्टौ लग्नदृष्टौ च सत्यामुदयशुद्धिरुक्ता कथमत्रोक्तं त्रिवसुव्ययवित्तग इति उच्यते षष्ठं द्वितीयभवनं द्वादशमेकादशं न पश्यंति स्वस्थानाद्धि स्पष्टं ते ग्रहास्तथान्यानि भव
नानीत्यत्र ग्रहस्थानाद्यदेकादशं तस्माद्ग्रहस्तृतीय एव भवति एवं यत्षष्ठं तस्माद्ग्रहोऽष्टम एव यद्द्वितीयं तस्माद्द्वादशः यद्द्वादशं तस्माद्द्वितीय इति अतो यदुक्तं त्रिवसुव्य
यवित्तग इति तद्ग्रहादर्शनमेवेति न विरोधः अथान्यैः केवलमत्राहदृष्ट्यैवोदयशुद्धिरुक्ता यतः स्वनाथेन विलोकितो वा नवांशको लग्नगतो नराणां निहंत्यनिष्टानि
तथा पमृत्यं कलत्रसंस्थश्च निनितंविनीनामिति तदलाभे लग्नदृष्ट्या वा पश्यद्यदंशाधिपतिर्विलग्नं लग्ने च वा स्यादुदयांशशुद्धिः अस्तांशनाथः स्मरभं विलग्नात्स

उभयदृक्फलदा न बलाद्यतो लवदृगुद्वहते कियदूनतां तदिह केवललग्नदृशः फलं शकलितं कलितं यवनेश्वरैः ॥१०॥
स्पृशति किं न कदाचिदिह स्वतामवयवावयविन्यवलोकिते अमतकेवललग्नदृशां न तन्मतमतः कसहं समुपास्महे ॥११॥

श्येत्तदास्तांशविशुद्धिरुक्तेति अत्र तुल्यबललग्नयोरिति योगपद्यमुक्तं तत्कथमित्याह १ उभयस्य दृक् उभयदृक् नवांशस्य लग्नस्यापि या दृष्टिरित्यर्थः सा
फलदा स्यात् कस्मात् बलदा यतः बलस्य दृढत्वात् लग्नं हि शरीरं अंशस्तु तदवयवरूपः उभयदर्शने सति सम्यक् फलमिति अतो लवदृक् अंशदृष्टिः किय
दूनतामुद्वहते धारयति किं परिमाणमस्येति कियत् कियच्च तदूनं च तस्य भावः कियदूनता केवलमंशदृष्टिः किंचिन्न्यूनफलेत्यर्थः तत्तस्मादतः कारणा
दिहास्मिन्विवाहे केवललग्नदृशः फलं शकलितमर्धितं यवनेश्वरैः कलितं लक्षितं शकलं संजातमस्येति शकलितं अंशदृष्टिं विना केवलाया लग्नदृष्टेः फ
लमर्धितं यवनैः प्रोक्तमित्यर्थः १० अमुमुक्तमेवार्थं युक्त्याह द्रढयति यस्मात्कारणात् अवयविनि विलोकिते सति अवयवः कदाचिदिह दृश्यतां किं न स्पृश

जननर्क्षविलग्नयोर्जन्मराशिजन्मलग्नयोरष्टमंभवनमभ्युदितंउदयंगतंविवाहेत्यजेत् जन्मराशेर्जन्मलग्नाद्वा अष्टमंलग्नंत्यजेदितितात्पर्यार्थः कथंभूतं
व्यलिवृषंवृश्चिकवृषव्यतिरिक्तंवृश्चिकवृषावष्टमावपिनत्याज्यावित्यर्थः अत्रहेतुमाह सितपुलस्तीति तयोरलिवृषयोरीशतास्वामितातनुसमायोहिल
ग्नाधिपतिःसएवअनयोरिति इतिहेतोःसितपुलस्त्योर्मतेदूषणंनसमेतिनसंगच्छते तनुरितिसशेरखुपलक्षणं एतदुक्तंभवति वृश्चिकोष्टमोमेषस्यैवभवति
योवृश्चिकस्याधिपःसएवमेषस्यएवंवृषोष्टमस्तुलायाएव तयोरधिपतिरेकएव अतएकाधिपतित्वात् वृषवृश्चिकयोरष्टमत्वेनदोषइति केचित्सुहृत्वे
पिनदोषमाहुः झषकुलीरवृषालिमृगांगनाजननराशिविलग्नगृहाष्टमाः शुभफलाभगणाकथितास्तयोरधिपतीसुहृदौहिपरस्परमिति १६ अथचरत्र

व्यलिवृषंजननर्क्षविलग्नयोर्भवनमष्टममभ्युदितंत्यजेत् सितपुलस्तिमतेनतदीशतातनुसमेतिसमेतिनदूषणं १६
चरलवंचरेश्मगमुत्सृजेन्मृगतुलाधरगेमृगलक्ष्मणि युवतिरत्रभवेत्कृतकौतुकामदनवत्यनवत्यजनोन्मुखी ॥ १७

२५

यसंनिपातदोषमाह चरलवंचरनवांशंचरवेश्मगंचरराशिलग्नस्थितमुत्सृजेत् परित्यजेत् कस्मिन्सति मृगलक्ष्मणिमृगतुलाधरगेसति मृगःशश
लक्ष्मलांछनंयस्यासौतथा तस्मिन् चंद्रेमकरस्थेतुलास्थेवेति चरामेषकर्कतुलामकराः तत्रकर्कमेषस्थितेचंद्रेविवाहनक्षत्राभावात् मृगतुलाधरग
इत्युक्तं अत्रफलमाहयुवतिरिति अत्रयोगेकृतकौतुकायुवतिःमदनवतीसती अनवत्यजनोन्मुखीभवेत् कौतुकंविवाहकंकणंकृतंकौतुकंयस्याःसा
तथा विवाहितेत्यर्थः नवः अनवःपुरातनस्तस्यत्यजनंतत्रोन्मुखीउत्सुका मदनार्त्तासतीपूर्वभर्तृपरित्यागेउत्कंठिता परपुरुषगामिनीत्यर्थः केचित्तुवर्गो
त्तमेसतिनैषदोषइत्याहुः वर्गोत्तमेचरगृहेनचरानवांशइति अतएवाहुरन्येपि कर्कलग्नेथवामेषेघटांशोयदिदीयते तुलायांमकरेचंद्रेवैधव्यंलभतेतदे

श्च इति यत्त्वयोच्यते तद्व्यर्थमित्यनिष्टप्रसंजनं अतश्च प्राग्गुक्तकालमीमांसनाच्च नवांशपतेर्लग्नदृष्टिस्तदंतर्गतनवांशदृष्टिश्च विलोक्येति सिद्धं तनुलग्न
पतिना लग्नं दृष्टव्यमस्तपतिनास्तलग्नमित्येतत्तदपि केषांचिन्मतमस्ति तदपि दूषयति १३ यदि तनुपतिस्तनुं न पश्यति अथ अस्तपो लग्नात्सप्तमाधीशोस्तं ल
ग्नात्सप्तमं न पश्यति तदा तत्कृतं लग्नकृतं अस्तलग्नकृतं च शुभं न पश्यति इति परः कश्चिदाह तत्र अहो अस्मिन्मते लवतरौ लव तरुरिव तरुस्तस्मिन् रौद्रः उग्रः
शाणो हुतः अशनिः स्वड्गः परं पतेपरमित्यव्ययमुत्कृष्टार्थे अस्मिन्मते नवांशवृक्षोपरि अत्यर्थं रौद्रशनिपातो भवेन्नवांशफलोच्छेद इत्यर्थः एवं सप्रयुक्तिकामुदय
स्तशुद्धिमुक्त्वाधुना जन्मराशिलग्नाभ्यामंशस्य शुद्धिमाह १४ लग्नं च भं च लग्नभे जनने लग्नभे जन्मलग्नजन्मराशी तयोर्मृतिशासितुः अष्टमस्थानाधिपतेः मृति

तनुपतिस्तनुमस्तमथास्तपो यदि न पश्यति नश्यति तत्कृतं इति परः परमत्र मते पतेल्लवतरौ चतरौद्र इवाशनिः १४
जननलग्नभयोर्मृतिशासितुर्मृतिगतस्य च राशिनवांशकाः तनुगता यदि तत्तनुतं वधूरितिलकातिलकाप जलांजलिः १५

गतस्य ताभ्यामष्टमस्थितग्रहस्य च राशीनां नवांशकाः यदि विवाहकाले तनुगता लग्नस्थितास्युः तदा वधूः अतिलका अभर्तृकासतीतिलकाय भर्त्रे जलांजलीन्त
नुते विस्तारयति इदातोत्यर्थः तिलकः शृंगारकतिलकः नास्ति तिलको यस्याः सा अतिलका विधवेत्यर्थः तिलक इव तिलकस्तिलकः भर्तेति यावत् मृतभर्त्रे स्वयमे
वाजलिदानेन वध्वा अनपत्यतापि सूचिता एतदुक्तं भवति कस्याश्चिज्जन्मलग्नं वृषः जन्मराशिः कर्कः तयोरष्टमभवने धनुर्धरकुंभौ तयोराधिपती गुरुशनी एतौ
नित्यौ कदाचित्तत्र धनुषि कुंभे वा कश्चन ग्रहः स्थितः स चेत्शुक्रः तेषां गुरुशनिशुक्राणां राशयो धनुर्मीनमकरकुंभतुलावृषाः एषन्यतमस्य नवांशो यदि तस्य वि
वाहे लग्नगतो भवति तदा परिणीता स्त्री अनपत्या विधवा भवेदिति एवं वध्वा अपि जन्मलग्नाज्जन्मराशेश्च १५ अथाष्टमलग्नदोषं तदपवादं चाह ॥ ॥

रिणा बलवानं शराशिस्त दायस्य कस्यांशजनितस्य दुष्टस्य भयं न स्यादित्यर्थः १९ अथ जन्मकालिकग्रहवशेन दोषांतरमाह जनुरनुक्रम अनुजनुरव्ययीभावः अ
थवा अनुगतोजनुः अनुजनुः अत्यादयः क्रांताद्यर्थे द्वितीययेतितत्पुरुषः पुंवत् जनुर्जननजन्मानीत्यमरः जन्मःकालानुक्रमेण योग्रहो मृतिग जन्मलग्नादष्टमः
यश्च जन्मलग्नान्मृतिपः अष्टमस्थानाधीशः सग्रहो यदि विवाहकालेतनुगतो लग्नगतस्तदाशिवंशुभं क्वचिन्नतनुतोनकदाचित्कुभंकरोतीत्यर्थः इतीयं जन्मका
लवशेनयाउक्ताविविक्तिः विवेकः विवेचनंविविक्तिः सासदा तदाफलदास्यात् तदाकदा चेत्सजन्मकालोविवाहकालश्च इहकालेस्फुटःसिध्यति यदाघटीपला
त्मिकःस्फुटो जन्मकालोविवाहकालश्चसाधितःस्यात्तदैवेदंसूक्ष्मफलविवेचनंस्यान्नान्यथेत्यर्थः २० इतिश्रीसकलगमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेश

अनुजनुर्मृतिगोमृतिपश्चयः सतनुगस्तनुतेनशिवंक्वचित् इति विविक्तिरियंफलदासदासइहसिध्यतिचेत्समयःस्फुटः २०
इति विवाहवृंदावनेनवांशचिंताध्यायश्चतुर्थः ४ अथ लग्नबलाध्यायः अरिपराक्रमलाभविनाशगोरविरविश्रमसौख्यसुतार्थदः
मदनमूर्तिशयःशयसंग्रहेमृगदृशामशनिःशनिराहुवत् १

विरचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांनवांशचिंताध्यायश्चतुर्थः ४ ए
वंलग्ने नवांशशुद्धिमभिधायाधुनाग्रहबलशुद्धिमाह तत्रादौलग्नाद्रवेःशुभाशुभस्थानान्याह अत्रापिद्रुतविलंबितवृत्तानि अरिःषष्ठपराक्रमस्तृतीयंलाभएका
दश विनाशोष्टम एषुगच्छतीतथालग्नादेषुवर्तमानोरविःमृगदृशांस्त्रीणांशयसंग्रहे पाणिग्रहे अविश्रमसौख्यसुतार्थदःस्यात् नास्तिविश्रामोविश्रांतिर्यस्यतद
विश्रमंतच्चतत्सौख्यंचतद्ददातीतितथा पंचशाखःशयःपाणिरित्यमरः शेषेषुष्टसुस्थानेषुदुष्ट इत्यर्थसिद्धं तत्राप्यतिदुष्टस्थानद्वयमाह मदनेतिमदनमूर्तिशयःअ
शनिःस्यात् अतिदुष्टःस्यादित्यर्थः मदनःसप्तमंमूर्तिलग्नंतत्रशेतेसौमदनमूर्तिशयःसप्तमस्थोलग्नस्थोवेत्यर्थः अशनिरिवाशनिर्वज्रःघातकइतियावत् शनिराहु

अथ चतुर्थद्वादशलग्नस्य दोषंतरपवादं चाह तनुभ्रजन्मचतनुजन्मनीत योस्तनुजन्मनोः जन्मलग्नजन्मराश्योः सुखगृहं चतुर्थभवनं तनुगतमित्यनुवृत्तिः
सुखहृत्सुखनाशनं स्यात् कैः सुखकर्तृभिर्ग्रहैः अबलताशबलैः कालाच्चेति सप्तम्यर्थे तृतीया अबलानां भाव अबलता तया शबला मलिनास्ते बलरहितैरित्यर्थः
अर्थात्सुखकर्तारो ग्रहा यदि बलिनः स्युस्तदा जन्मलग्नराशिभ्यां चतुर्थलग्नं सुखहृत्स्यादिति अपीति तयोर्जन्मलग्नजन्मराश्योः व्ययभं द्वादशभवनमपि तनुगतं तदा
व्ययभंक्तृ स्यात् व्ययभं नक्तीति व्ययभंक्तृ व्ययनाशनं तदा कदा यदा धनकारिणो ग्रहाः विगतबाधनकाः स्युः विगतं बाधनकं येषां ते तथा बाधारहिताः निर्दुष्टा इत्यर्थः
यदा धनदातारो ग्रहा दोषरहिताः स्युस्तदा जन्मलग्नराश्योर्द्वादशलग्नं व्ययनाशकरं स्यादित्यर्थः अर्थादेते निर्बलास्तदा सतद्व्ययकरं स्यादिति तथा च गर्गः चतुर्थद्वा

सुखगृहं सुखहृत्तनुजन्मनोरबलताशबलैः सुखकर्तृभिः अपि तयोर्व्ययभं व्ययभंक्तृ चेद्विगतबाधनका धनकारिणः १८
अशुभकृत्तवलग्नः खलु यांशकोजनुरनेहसि नेहसिताशुगे तनुगतेपि शिवं युवयोषयोर्बलवतालवतानभयं क्वचित् १९

दशोकार्ये लग्ने बहुगुणान्विते इति अपि चाकार्ये योगबलाद्द्वादशे चतुर्थे इति अथ जन्मगृहवशेन नवांशस्य दोषांतरं तदपवादं चाह १८ जनुषः अनेहा जनुरनेहा
तस्मिन् जन्मकाले अंशक अशुभकृत्तवलग्नो भवति अशुभं करोतीत्यशुभकृत् स चासौ खलश्च अशुभकृत्खलः तं गच्छतीति अशुभकृत्खलगः जन्मकाले दुष्टकारि
पापग्रहो यस्मिन्नवांशेस्ति स नवांश इत्यर्थः इहास्मिन्नवांशे सितांशुः सितांशुं चेदिं गच्छतीति सितांशुगः तस्मिन् सितांशुगे तनुगते लग्नगतेपि अपिः वार्थे युवयोषि
तो वरवध्वोः शिवं शुभं न स्यात् वरवध्वोर्जन्मकाले दुष्टकारी पापग्रहो यस्मिन्नवांशेस्ति स नवांशो यदि विवाहकाले चंद्रगतो लग्नगतो वा भवेत्तदा अशुभकृत्स्या
दित्यर्थः इत्यादिकस्यांशजनितदुष्टस्यापवादमाह बलवत इति बलवतः बलयुक्तात् लवतोंशकात् चिद्रूपं न स्यात् चेज्ज्ञातकोक्तेन अधिपयुतो दृष्टो वेत्यादिप्रका

स्मरः सप्तमाष्टमयोस्तु अतिदोषमाह सनियतमिति सबुधः मकरेंगितमृत्युगः वधूवरं यमकरे नियतं विदधाति करोति मकरेण इंगितं चेष्टितं यस्य स मकरेंगि
तो मदनः सप्तमं मृत्युरष्टमं तत्र गतो बुधो वधूवरं यमहस्ते विदधाति मारयतीत्यर्थः ४ अथ गुरोः अनंत्यं द्वादशं मदः सप्तमं ताभ्यामन्यानि अनंत्यमदानि तेषु द्वादश
सप्तमव्यतिरिक्तेषु स्थितो गुरुः सुदं हर्षं श्रियं लक्ष्मीं च सृजति ददाति तत्राष्टमे महादोषमाह कालगृह इति कालो मृत्युः तद्गृहमष्टमं तत्र स्थितो गुरुर्गृहभंगदः स्या
त् गृहं भार्या तस्या भंगो मृतिस्तस्मदः एतत्प्रसंगेन गुरोर्दोषांतरमाह अशुभकृदिति मकरेपि स्थितो गुरुः करग्रहे अशुभकृत्स्यात् नीचराशिस्थितत्वात् दोषांत
रमाह नमगेति मृगराजसिंहस्तत्र गतो गुरुः जगतो विश्वस्य करग्रहे न हितः न शुभः ५ अथ शुक्रस्य सहसहजं तृतीयं एकादशग्रहणेन नामग्रहणात् सपत्नः श

२८

गुरुरनंत्यमदेषु मुदं श्रियं सृजति कालगृहे गृहभंगदः अशुभकृन्मकरेपि करग्रहे न मृगराजगतो जगतो हितः ५ सहप
त्ननिमीलनमन्मथे प्रथमदे च गुरुर्गुरुभीतिकृत् वहति शेषगृहेषु महोत्सवं व्ययगतः समतासमतांतरात् ६ खलकृ
तातनुरोहिणिमित्रयोर्दुरधरा विधुरां कुरुते वधूं ॥

त्रुः षष्ठं निमीलनं मरणमष्टमं मन्मथो मदनः सप्तमं एषु प्रथमदे च गुरुः गुरुभीतिकृ
त्स्यात् प्रथमा देवा दैत्याः पूर्वदेवाः सुरद्विष इत्यभिधानात् तेषां गुरुः शुक्रः गुरुभीतिर्महाभयं मरणादि तत्कारी भवेत् शेषगृहेषु षष्टसु स्थानेषु महोत्सवान्ना
हति प्रापयति ददातीत्यर्थः तत्र द्वादशे विशेषः व्ययगत इति स शुक्रो व्ययगतो द्वादशस्थः मतांतरादन्येषां मते समतां मध्यत्वं वहति तथा च तद्वाक्यं केप्याहुरंत्ये शु
भदौ सितेज्याविति शनिराहुकेतूनां फलं रविवदित्युक्तमेव एवं प्रातिस्विकं भावफलमुक्त्वाधुना कर्तरीलक्षणं विशेषफलं जामित्रफलं चाह ६ तनुरिति लग्नं रोहिण्यामित्रं
रोहिणिमित्रं रोहिणीभर्ता चंद्रः ज्यापोः संज्ञा यामिति ह्रस्वः तयोर्लग्नचंद्रयोः खलकृता पापग्रहकृता दुरधरा वधूं विधुरां वियुक्तां कुरुते दुरधरा जातके प्रसिद्धा उ

वत्पथैषुस्थानेषु शनिराहुतथैव रविरिति शनिराहुोरपीदमेव फलमितिभावः अत्रराहुशब्देनकेतुरपिगृह्यते तस्यापितद्रूपत्वात् यतो वसतिच वृत्तपातमपरं खपाततोराहुरेतीत्यादि अतएवस्पष्टमाह श्रीपतिः प्राग्लग्नाद्रविनंदनेनशिखिनास्वर्भानुना चक्रमादिति १ अथ चंद्रस्यत्रयस्त्रतीयंधनं द्वितीयं लाभएकादशंसु खंचतुर्थं एषुशशीशुभःस्यात् शेषेष्वशुभः तत्राप्यतिदुष्टान्याह निधनेति निधनमष्टमं मूर्तिर्लग्नं रिपुःषष्ठं एष्वतिगर्हितोतिदुष्टः एतस्मसंगेनदोषांतरमाह अ शुभइति अशुभस्यशुक्रस्य अशुभशुक्रो तयोः सखासतथाराजाहःसखिभ्यष्टच् पापयुक्तः शुक्रयुक्तोवेत्यर्थः असून्प्राणान्खनति प्राणनाशकोभवतीति अर्था द्बुधयुक्तोगुरुयुक्तोवाशुभः दोषांतरमाह दिनकरेति दिनकरोनकरःशंसुखंनकरोति दिनकरेणऊनाःकराररश्मयोयस्यसतथा अस्तंगतइत्यर्थः २ अथभौमस्य

त्रिधनलाभसुखेषुशुभःशशीनिधनमूर्तिरिपुष्वतिगर्हितः अशुभशुक्रसखःसखनत्यसून्दिनकरोनकरोनकरोतिशं २ अ वनिजस्त्रिभवादिषुवृद्धयेमृतिकरोमृतिमूर्तिमदाश्रितः॥ इहनभोयुजिजीवदशंविनाच्युतनयातनयामिषभुग्वधूः ३ व्यय गृहंविरहय्यहिमांशुजःसकलवेश्मसुखेमसुतार्थदः सनियतंविदधातिवधूवरंयमकरेमकरंगितमृत्युगः ॥ ४ ॥

अवनेर्जातो अवनिजोभौमःत्रिभवारिषुवृद्धयेभवति शेषेषुनवसुदुष्टः तत्राप्यतिदुष्टानिम्रतीति मृतिरष्टमं मूर्तिर्लग्नं मदःसप्तमं एतानि आश्रितःएषु स्थितइतियावत् मृतिकरःस्यात् इहास्मिन्भौमेनभोयुजिसतिनभसायुनक्तीतिनभोयुक्तस्मिन्नभोयुजिदशमस्थेसतिवधूच्युतनयासतीतनयामिषभुक्स्यात् च्युतस्त्यक्तोनयोयथासातथा अन्यायमार्गवर्तिनीतनयस्यामिषंमांसंभुनक्तीतितथा अस्यापवादमाह जीवदशंविना तस्मिन्दशमस्थेभौमेगुरुणादृष्टेसतिना यंदोषइत्यर्थः ३ अथबुधस्य हिमांशुजोबुधद्वादशगृहंविरहय्यपरित्यज्यशेषेषुसप्ताष्टमव्यतिरिक्तेषुवेश्मसुस्थानेषुवेश्मगृहंसुताःपुत्राःअर्थोद्रविणंत

तिवशात् शुक्रस्य वक्रमध्य एव पश्चिमास्तं पूर्वोदयश्च भवती अतोर्कस्य प्राग्गतित्वाच्छुक्रस्य पश्चिमगतित्वाच्च गतियोगेन तदंतरहृद्ध्ले सति अल्पदिनैरेव शुक्रस्योज्व
लता स्यात् अतोत्र बालत्वं वृद्धत्वमल्पदिनमुक्तं पश्चिमोदय पूर्वास्तौ तु मार्गगतावेव भवतः अतस्तत्र गत्यंतरेणांतरवृद्धौ सत्यां बहुदिनैरुज्ज्वलता स्यादतस्तत्र ब
हुदिनमुक्तं अतोत्र हेतुर्गतिवशादिति एवं लग्नाद्दृह बलान्युक्तानि तत्र केषामावश्यकत्वं तदाह ९ द्युमणिः सूर्यः जीवो गुरुः नवोदयो शिशुस्तौ लवोदयशासिनो।
अंशपति लग्नपती तेषां चतुर्णामुडुपतेश्चंद्रस्य इति पंचबलीं विना चलभुवां फलानि विरिंचिः कमलासनइत्यमरः तेन कृतान्यपि शुभं विरिंचि परिणमंति पंचानां
बलानां समाहारः पंचबली चला चंचला भूर्यासां ताश्चलभुवस्त्रियः तासां फलानि विरिंचिः कमलासनइत्यमरः तेनकृतान्यपि शुभं विरचंति तानि शुभविरिंचि

द्युमणिजीवलवोदयशासिनामुडुपतेरिति पंचबलीं विना परिणमंति फलानि चलभुवां फलविरिंचिविरिंचिकृतान्यपि १० व्य
यगृहं बुधभार्गवजीवयुग्यदि न तत्कुलमित्रजनेष्वपि कृपणतानरनीरजनेत्रयोरिति नशक्रमतेक्रमतेमतिः ११ इति विवा
हवृंदावने लग्नबलाध्यायः पंचमः ५ अथ चंद्रबलाध्यायः

शुभनाशकानि प्रथमाबहुवचनं रिचविरेके कर्तरि क्विप् परिणमंति परिपच्यंते य
त्र लग्ने द्युमणिजीवादीनां पंचानां बलं न लभ्यते तत्र स्त्रीणां सर्वाणि फलानि ब्रह्मकृतान्यपि शुभनाशकत्वरूपं परिपाकं प्राप्नुवंतीत्यर्थः १० अथ द्वादशबुधगु
रुशुक्राणां मतांतरमाह व्ययगृहं द्वादशस्थानं यदि बुधभार्गवजीवयुग्न भवति यद्येकोपि व्ययस्थाने न भवेत्तदा नरनीरजनेत्रयोः नरो वरः नीरजं कमलं तद्व
न्नेत्रे यस्याः सा वधूः वरवध्वोः कृपणता स्यात् केष्वपि कुलमित्रजनेष्वपि कुलमित्राणि कुलपरंपरागतमित्राणि यद्वा कुलं पुत्रभ्रात्रादि मित्राणि सुहृदः तेच तेज
नाश्च तेष्वपि किं पुनरन्येषु इदं कस्य मतमित्याह इतीतीति इत्थं विविधः शक्रमतेइदं मतं विषये अस्माकं मतिर्नक्रमते न चलति एवंविधे इंद्रमते अस्माकं बुद्धिर्न प्रवर्तते

भयस्थिते दुरुधरेति लग्नाच्चंद्राद्वा द्वितीयद्वादशस्थयोः पापग्रहयोः सतोः पापग्रहकृता दुरुधरा स्यात् सात्र कर्तरीत्युच्यते सा वधूं विधवां कुरुते अथ जामित्रदोषः श्रुता
ति तयोस्तनुहिमगुमित्रयोः श्रुतिशरांशं पंचाशदंशं इतं प्राप्तम् अपुण्यं पापग्रहं त्यजेत् किमिव अपुण्यमिव लग्नं चंद्रो वा यस्मिन्नवांशेऽस्ति तस्माच्चतुःपंचाशत्तमे नवांशे य
दि पापोऽस्ति तं पापग्रहं पातकवद्दूरं त्यजेदित्यर्थः ७ अथ गुरुशुक्रयोर्बाल्यादिदोषमाह सुरगुरुर्भृगुश्च गतेष्वयोरुदयास्तयोः सप्तदिनानि क्षिपति शुभमिति शेषः कालनै
रंतर्ये द्वितीया गुरुः शुक्रो वा सोदयादनंतरं सप्तदिनानि बालः अस्तात्प्राक् सप्तदिनानि वृद्धः क्षिपति प्रेरयति नाशयतीत्यर्थः इहास्मिन्युगे युग्मे गुरुशुक्रयुगुले गलदो
जसि सति युगस्य वधूवरस्य करग्रहो विवाहः स्फुटमत्यर्थममंगलदः स्यात् उल्बणं विशदं स्फुटमित्यभिधानात् गलत् ओजो बलं यस्य तद्गलदोजस्तस्मिन् गलदो ।

श्रुतिशरांशमितं स्मरभे तयोर्ग्रहमपुण्यमपुण्यमिवत्यजेत् ७ क्षिपति सप्तदिनान्युदयास्तयोः सुरगुरुश्च भृगुश्च गतेष्वयोः
इह युगेऽपि युगस्य करग्रहः स्फुटममंगलदो गलदोजसि ८ शिशुजरत्वमहान्युदयास्तयोर्दश चतुर्दश चांगिरसः स्फुटं उशन
सो दश पंच च पश्चिमगतिवशात्त्रिदशाहमपश्चिमे ९

जसि स्थानादिबलहीने अस्तंगते नीचस्थिते चेत्यादि सूचितं एवं मतांतरात्सान्येन
बालत्ववृद्धत्वे उल्काहननादिकपरत्वेन तयोः सयुक्तिकं विशेषमाह ८ अंगिरसो बृहस्पतेः शिशुजरत्वं क्रमेण दश चतुर्दश अहानि स्फुटं स्यात् शिशुश्च जरंश्च शिशुजर
तौ जीनो जीर्णो जरन्नपीत्यमरः तयोर्भावः शिशुजरत्वं दश दिनानि बालत्वं चतुर्दश वृद्धत्वमिति अत्र स्फुटमित्युक्तेः पूर्वे साधारण्येनोक्तमिति सूचितं उशनसः शुक्रस्य
शिशुजरत्वं पश्चिमे पश्चिमदिशि क्रमेण दश पंच च अहानि स्यात् पश्चिमोदये दश दिनं बालत्वं अस्ते पंचदिनं वृद्धत्वमित्यर्थः अपश्चिमे पूर्वदिशि त्रिदशाहं स्यात्
त्रयश्च दश च त्रिदश त्रिदश च तानि अहानि त्रिदशाहस्तं कालनैरंतर्ये द्वितीया अह्नः शब्दात् टच् रात्राह्नाहाः पुंसि त्रिदिनं बाल्यं दश दिनं वृद्धत्वमित्यर्थः कस्माद्

न्मराशिभ्यां द्वादशाष्टमगतानि लग्ननवांशादीनि सप्त पंचकं कथं प्रतिपादितानि इत्यादीनि वरस्य तथापि गृह्यंते तर्हि एकं चंद्रबलं कथं न गृह्यते इति तत्स्थानि शंकि
च २ अस्य श्लोकद्वयस्य एवमादित्यनेन न संबंधः लग्ने भवेद्वाग्निकः नवलवो नवांशः यदि स्वामिना निजाधिपेन युक्तो वीक्षितो वा न स्यात् पुंसः अंतः पुमंतः अ
तोवसाने किंचु संगममिति इं दुश्च तत्तनुश्च इंदुतनू ताभ्यां कामगः सप्तमगा जामित्रस्थितो ग्रहः पत्युर्भर्त्तुर्दीर्घनिद्रया मरणेन सह संगमं समागमं दिशति ददाति
दिशदाने भर्तुर्मरणं करोतीत्यर्थः ३ चंद्रमसीति चंद्रे उपचयात् वृद्धेः सकाशात् परिच्युते वलहीने सति कर्तुर्वरस्य आयतिशुभं उत्तरकालीनं शुभं उत्तरः काल आयति
रित्यमरः सभंगुरं सभंजनं भंजेर्भा वेकुरः विनश्यदिति यावत् असितशौनकादयो मुनयो निर्दिशंति कथयंति कैरपि परैर्भौमादिभिर्ग्रहैश्चारुगोचरचरैरपि

लाग्निको नवलवः पुमांतकृत् स्वामिना यदि न युक्तवीक्षितः संगमं दिशति दीर्घनिद्रया पत्युरिंदुतनुकामगो ग्रहः ३ चंद्रमसु
पचयात् परिच्युते चारुगोचरचरैः परैरपि कर्तुरायतिशुभं सभंगुरं निर्दिशंत्यसितशौनकादयः ४ एवमादिफलवादिनो नृणा
मैंदवं वलमुशंति किं न ते भानुरप्युपचये न जन्मतो यन्मतोक्तिषु तदिष्टमेव नः ५ ॥

चारुश्चासौ गोचरश्च तत्र चरंतीति ते तथा
गोचरे शुभस्थानस्थितैरपि अयं भावः चंद्रे क्षीणत्वादिना बलहीने सति अन्यग्रहाणां गोचरबललाभे सत्यपि वरस्योत्तरकालीनं सर्वशुभफलं नश्य
तीत्यसितशौनकादयो जगुः उक्तं चैतत् न कुर्वीतास्तगे चंद्रे दुःस्थिते जन्मराशितः क्रूरग्रहयुते तद्वन्मंगलान्यखिलान्यपीति ४ इत्याद्यनिष्टप्रसंगेन तत्
न्मतं दूषयति नृणामेवमादिफलवादिनः एवमादीनि फलानि पुरुषाणां इच्छंतीति त एकं चंद्रबलं कथं नेच्छंतीति तेषामनिष्टं अतस्तैरपि वरस्य चंद्रबलं
स्वीकर्त्तव्यमित्यर्थः यदुक्तं तैः पुंसां रविबलं ग्राह्यमिति तत्स्वीकरोति भानुरपीति येषां मतं यन्मतं यन्मते उक्तयः यन्मतोक्तयः तासु यन्मतवचनेषु न जन्म

तद्रस्यार्थः तथा च रत्नेंद्रविवाहपटले बुधभार्गवजीवानामेकोपि यदि नव्यये तद्धौदार्येन दंपत्योः पुत्रपित्रतिथिप्रीतिः ॥११॥ इति श्रीसकलागमाचार्यवर्यश्रीकेश
वसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां लग्नबलाध्यायः पंचमोध्यायः ५ एवं लग्नबलमुक्त्वाधुनावधूवरयोश्चंद्रबलविचार
आरभ्यते तत्रादौ मतांतरमनूद्य दूषयति अत्राध्याये रथोद्धतवृत्तानि कन्यकायाविवितरणं दानं तस्मै कन्यादानाय पूरुषो वरः पुरुषाः पूरुषा नरा इत्यमरः पात्रमात्रं
पात्रमेव पात्रमात्रं इति हेतोरस्य वरस्य ऐंदवं बलं इंदोरिदमैंदवं चंद्रबलं केचित्कोविदा बुधाः सन्सुधीः कोविदो बुध इत्यमरः न वितरंति न ददति वरः पात्रमात्रमि
तिहेतोर्वरस्य विवाहे चंद्रबलं नावलोक्यमिति केषांचिन्मतं तद्वाक्यं च नाधिकारो नराणां च विवाहे गर्भशोध इति तेषामुपहासमाह कोविदामिति तेषामनस्तन्म

कन्यकावितरणाय पूरुषः पात्रमात्रमिति नैंदवं बलं केचिदस्य वितरंति कोविदाः कोविदो किल करोतु तन्मनः ॥१॥ ईदृशं यदित
तः प्रतिग्रहग्राहिणोस्य किमभिप्रपंचितैः सांशनाडिगण योनिशुद्धिभिर्जन्मलग्नभवनव्ययाष्टमैः ॥२॥

नः किलकः विदांकरोतु विचारय

तु न कोपीतेषां मानसं तत एव जानंलिस्यर्थः विदांकुर्वंत्वन्यतरस्यामिति आम् लोटो लोपः लोडंतः कृतोनुप्रयोगश्च तेन विदामित्याम्ंतमव्ययं अतो न योर्मवधा
नेपि प्रयोगो घटते यथा रघुकाव्ये तं पातयां प्रथममास पपात पश्चाविति १ एवं ये मन्वानास्तेषामनिष्टमाह ततस्तस्मादुक्तहेतोः यदीदृशं पात्रमिति हेतोर्व
रस्य चंद्रबलं दद्यादिति तदास्य प्रतिग्रहग्राहिणो वरस्य सांशनाडीत्यादिभिः अभिप्रपंचितैः सविस्तरं प्रतिपादितैः किं प्रपंचविस्तारे प्रतिगृह्णं प्रतिगृह्णातीति प्रतिग्रह
ग्राही अंशाश्च नाडिश्च गणश्च योनिश्च तेषां शुद्धयः ताभिः सहवर्तमानानि तानि तथा जन्मानि लग्नभवनेतान्यष्टमव्ययाष्टमानि तानि तथा अयंभावः यत्वयोच्यते व
रः प्रतिग्रहग्राहकः एव पात्रमात्रं अतोस्य नैंदवं बलं एवं चेत्तर्हि वरस्य पराशरः प्राह नवांशभेदादित्यादिनांशशुद्धिः नाडीयोनिगणानां शुद्धयश्च जन्मलग्नज

रिष्टं न कार्यं तच्च तेषामप्यस्ति अतो वरस्यापि चंद्रबलं ग्राह्यमिति सिद्धं ७ एवं न केवलं पुरुषफले जातकेन चंद्रः स्वीकृतः किं त्वन्येष्वपीत्याह होरया जातकेन हिमरश्मिराहृतः स्वीकृतः केषु सुनफादिष्वपि पुंस्फलेषु योगेषु पुंसां फलं येषां ते तथा रविवर्जं द्वादशगे रनफा चंद्राद्वितीयगैः सुनफा इत्यादिषु चंद्रयोगेषु अन्येष्वपि चं द्रकृतेषु राजयोगादिष्वपि जातकेन पुरुषफले चंद्रः स्वीकृत इत्यर्थः अतो वरस्यापि चंद्रबलं विलोक्यमिति सिद्धं अथ कृष्णपक्षे केचित्तारां बलीयसीमाहुस्तद्विषयमुप न्यसति अत्रिरिति बहुले कृष्णपक्षेपि तारकापते श्चंद्रस्य बले सति तारका बलीयसी अत्रिर्मुनिराह कृष्णपक्षेपि न केवलतारा बलीयसी किंतु तारकापतिबले सति अतः कृष्णपक्षेपि चंद्रबलालाभे सति तारा बलं न प्रमाणमिति मुनेराशयः ८ अथ मतांतरं दूषयितुमुपन्यस्यति विकलं वर्ष्म शरीरं यस्य सौ विकलवर्ष्मा शरीरं वर्ष्म विग्रह इत्य



होरयापि हिमरश्मिराहृतः पुंस्फलेषु सुनफानफादिषु अत्रिराह बहुलेपि तारकां तारकापतिबले बलीयसीम् ८ प्रोषिते विकलवर्ष्मणि प्रिये तालिलिः स्त्रियमिय षकार्यिणीं अस्तु किंतु न पति प्रतीपतां सान्यथा घटयितुं पटीयसि ९

मरः तस्मिन्विकलशरीरे प्रोषिते प्रवासं प्राप्ते वा प्रिये भर्तरि सति तोलिलिर्मुनिः स्त्रियं कार्यिणीं इये षसेकृत कार्यं विद्यते यस्याः सा कार्यिणी कार्यकर्त्री अत इत्तिरनाविति मत्वर्थे इनिः कृत्स्नस्य पात्तस्य निषेधे पिकाचिद्वि धानात् कृष्णपक्षे चंद्रस्य क्षीणशरीरत्वात् वनस्पत्यादिषु प्रोषितत्वाच्च तत्तुल्या स्तारा या एव बलं मुख्यमिति भावः एतद्भुपेत्य दूषयति अस्तु किंत्विति तारकार्यिणी अस्तु तर्हि किंतु सा तारा अन्यथा प्रकारांतरेण पतिप्रतीपतां भर्तुरभिप्रताद्विपरीतं घटयितुं न पटीयसी न समर्था अतिशयेन पटुः पटीयसी सास्वयं कर्त्री भवतु परंतु भर्तृ प्रतिकूलकार्ये न समेत्यर्थः अतः कृष्णपक्षे चंद्रबलाभावे ताराबलेन ग्राह्यमिति सिद्धं अथ अतिकृष्णपक्षे नष्टश्चंद्र इत्युच्यते तद्विषयमाह ९ स चंद्रमाः बहुले कृष्णप क्षे केवलं क्रौर्यमेति अमां वसन्सन्नेव नश्यति तमां क्रूरस्य भावः क्रौर्यं अतिशयेन नश्यतितमां आख्यातमट आमन्वानरं तमव्ययं कृष्णपक्षे चंद्रः क्रूरत्वमेव प्राप्नो

तः नरस्य जन्मराशेः सकाशाद्धानुरूपच्चयेभाव्य इत्यध्याहारः गोचरे हि भानुरूपच्चयस्थानए एव शस्तः तन्नोस्माकमपि इष्टं संमतमेव तथा च तद्वाक्यं योनि
स्त्रीणां शिशिरकिरणश्चित्रभानुश्च पुंसां इत्यादि अत्र यदुक्तं स्त्रीणामेव चंद्रबलं तन्निराकृतं यदुक्तं रविबलमिति तदस्माकमपीष्टमिति भावः अतो वरस्यैव
धा अपि गोचरेण चंद्रबलं रविबलं च ग्राह्यमिति सिद्धं वरस्यैति च योषितां गुरुपतंगगोचर इत्यादि एवमनिष्टप्रसंगेन तन्मतं निरस्य युक्तं नरेणापि पुनर्वृष
पतिपत्रिवर्गपतिनानरेण शशिबलं न समाप्यते कन्यया कृत्वा समाप्यते लभ्यते त्रिवर्गपतिनेति हेतुगर्भं धर्मार्थकामानां स्वामिना पुरुषेण कन्याद्वारा यदि चंद्र
बलं प्राप्यते तर्हि इह विवाहसमये यत् गोमहीमहिष्यादि दीयते तर्हि तद्बलं तेषां गोमहीमहिष्यादीनां यच्चंद्रबलं तत्तस्य वरस्य दिशेदेहि गौर्धेनुः मही सेत्र वाटिकादि

नत्रिवर्गपतिना नरेण चेत्कन्यया शशिबलं समाप्यते दीयते यदि ह गोमहीमहिष्यादि तर्हि दिशतस्य तद्बलम् ईइंदुरिंदुवदनानुगं ब
लं पच्छतीह युवतिग्रहो यतः तन्नृणामपि कथं षडष्टगः स्वेडयत्स्वयमसून्मसूतिषु १

महिषी प्रसिद्धा आदिशब्देन दासीदासशय्यादीनां ग्रहणं य
दि शात्रमात्रमिति हेतोः कन्याया यच्चंद्रबलं तदेव वरस्य तर्हि गवादिकं यद्दीयते तस्यापि यच्चंद्रबलं तदपि वरस्य भवेदित्यतिप्रसंगः यद्वायमन्वयः चेत्त्रिवर्गपतिना
नरेण राशिबलं न समाप्यते न प्राप्यते यदि कन्यया समाप्यते तर्हि इह विवाहे यद्गवादिकं दीयते तस्य गवादेस्तद्बलं तस्य चंद्रस्य बलं दिशत्यति प्रसंगः यच्च परमते
यानि स्त्रीणां शिशिरकिरण इत्यादि तन्नुवदन्दूषयति इंदुश्चंद्रमाः इंदुवदनानुगं बलं पच्छति ददाति इंदुरिव वदनं यस्याः सा इंदुवदना ता अनुगच्छतीति इंदु
वदनानुगं अंगनानुसारं यतः इंदुः युवतिग्रहः स्त्रीग्रहः तस्मात्तद्बलं स्त्रीणामेव न तु नराणामिति चेत्तर्हि अयं चंद्रमाः प्रसूतिषु जन्मकालेषु षडष्टगः सन् नृणां पुरु
षाणामपि असून्प्राणान्कथं स्वेडयति अयमर्थः चंद्रमाः स्त्रीग्रह इति कृत्वा विवाहे स्त्रीणामेव चंद्रबलं ग्राह्यं तर्हि तेनैव हेतुना जन्मकाले षष्ठाष्टगेन चंद्रेण नृणाम

तं यपोस्तौभांडविनोतौबाहयस्यासौनया उच्चैर्नर्तितबाहुः सोपुहासमिदं विशेषणं अत्रास्मिन्विषयेतत्पयविमाथिनीसंहितास्मृतिसहायिनीश्रुति
र्वहति तस्यपंथास्तत्पथः ऋकपूरभ्यः पथामानसइत्यप्रत्ययः तविमथ्नातितया तस्यवराहस्ययोमार्गस्तस्यभंगकर्त्रीसंहिताश्चस्मृतयश्चताः सहायाः
संति अस्याः सातयासंहितास्मृतिसहिताश्रुतिर्वहतिप्रसिद्धास्तीतियावत् राहुर्नास्तीतिवराहेणयदुक्तंतत्संहितास्मृतिश्रुतिभिरागमैर्विरुद्धमितिभावः
नचयथा वराहेणहस्तस्यस्वच्छायेत्यादिनाएवमुपरागकारिणमुक्तमिदं दिव्यदृग्भिराचार्यैःराहुरकारणमस्मिन्नित्युक्तःशास्त्रसद्भावादिति योसावसुरोराहु
रित्यादिनाचग्रहणराहुर्नेकारणमितिप्रतिपादितं तदिरूढाः संहिताजिव्हावलेदिपरितःस्तिमिरतुदोमंडलंपदिसलेहमिति अशनिभयसंप्रदायोपाट
लिकुसुमोपमोराहुरित्यादयःस्मृतयश्चसर्वेभूमिसमंदानंसर्वेब्रह्मसमाहिजाः सर्वंगंगासमंतोयंराहुग्रस्तेनिशाकरेइतिसर्वेषामेववर्णानांसूतकंराहु

संहितास्मृतिसहायिनीवहत्यत्रतत्पथविमाथिनीश्रुतिः १ नैर्ऋतीदिगियमस्यदिक्पतेर्ध्यानदानबलिभिःफलप्रदे॥

दर्शनमित्यादयःश्रुतयश्च तत्रमाध्यंदिनीश्रुतिःस्वर्भानुर्हवैआसुरिःसूर्यंतमसाविव्याधेति अथर्वश्रुतौहंसोपनिषदिचसोहंघनमितिघनमिति
किलिकिलिलस्यराहोःशिरमाछादयतिभाछिन्नपाप्मावैछायारजनीरूपापाप्मानंकरोदुराधर्षयतिघृणीविरश्मिर्विरेचयतिपृथ्वीमाछादयतिदीप्तिमाछा
दयतिद्युतिमाछादयतीत्यादयःएतत्स्वकौशलदर्शनायग्रंथकृतःपांडित्यमात्रं यतोराहुर्नास्तीतिवराहोनब्रूतेकिंतुग्रहणेसौनकारणमितिनछादकइ
त्यर्थः अस्यस्मृत्यादिविरोधोपितेनैवपरिहृतःयोसावसुरोराहुस्तस्यवरोब्रह्मणाप्रदत्तःआप्यायनमुपरागेदत्तहुतांशेन तेनभवितातस्मिन्काले
सान्निध्यमस्यतेनोपचर्यतेगहोरित्यादिनाच अथवुराहोक्तिःसम्यगेव १ अथराहोरस्तित्वेप्रमाणांतराण्याह अस्यराहोर्दिक्पतेर्दिशाधिपतेरियंप्रसि



30

तिक्षीणत्वात् दर्शेतुवर्तमानश्चंद्रोनातितरांनश्यति किंतु अदृग्गोचरएव अतोनष्टइत्युच्यते यद्वा अमावसन्निति पाठः तत्र अमेत्यव्ययंसहार्थे अमासाकंसमंसहेत्य
भिधानात् सूर्येणसहवसन्नित्यर्थः एषचंद्रः तत्रअमायां अमासमीपेच यदिनास्ति अतितरांनष्टोभवतितदाजनिषुजन्मकालेषुतत्कृता तेनचंद्रेणकृतारिष्टरौद्रता कथं
स्यात् रिष्टस्यरौद्रता उग्रत्वंरिष्टस्य अतिशयता यदितत्र चंद्रस्यसर्वथा अभावस्तदातज्जनितमत्युग्रमरिष्टंकथंस्यात् अतोऽमायांनैवनश्यतीतिकिंतु प्रकाशहीनस्ति
ष्ठतीति ग्रहणेपितमत्यसमप्यस्ति यदिसनष्टोभवतितदातत्कृतसूर्यग्रहणंकथंस्यादित्यादि १० अथसिद्धांतमाह दुर्बलेपिनिजपतौसभर्तरिपार्श्वगेसमीपवर्ति
निसतिकुटुंबिनीकुटुंबनिर्वाहकातत्पत्नीतदभीष्टकार्यकृत्स्यात् तस्यभर्तुर्यदभीष्टंकार्यंतदेवकरोति नतुतत्प्रतिकूलं एवंतारकापिशशिनश्चंद्रस्यानुकूलतासंभ

वोऽर्थमेतिबहुलेसकेवलंनैवनश्यतितमामसमांवसन् नास्तिचैषयदितत्रतत्कथंतत्कृताजनिषुरिष्टरौद्रता १० पार्श्वगेनिज
पतौकुटुंबिनीदुर्बलेपितदभीष्टकार्यकृत् तारकापिशशिनोऽनुकूलतासंभवेभवतिपक्षपातिनि ११ इतिविवाहवृंदावनेचं
द्रबलाध्यायःषष्ठः ६ अथराहुसत्ताध्यायः यद्वराहमिहिरोनराहुरित्याहतांडवितबाहुरुच्चकैः

वेनुकूलत्वालाभेसतिपक्षपातिनिअनु
कूलत्वंविलोक्यमित्यर्थः अतःकृष्णपक्षेपिचंद्रबलसद्भावेताराबलंग्राह्यमितिसिद्धं तथाचाहुः चंद्रस्यसर्वदाबलमसितेताराबलंग्राह्यमिति ११ इतिश्रीस
कलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायांविवाहदीपिकायांचंद्रबलाध्यायःषष्ठोध्यायः ६ अथकेचिद्गृहस्त्वेरा
होर्नमन्यंतेतदर्थंस्वकौशलंदर्शयन्राहुसत्ताध्यायंवदति तत्रादौवराहोक्तमागमप्रामाण्येनदूषयति एतदारभ्यत्रयोदशश्लोकातद्वृत्तानियद्वराहमिहि
रोनराहुरित्याहराहुर्नास्तीतिब्रूते कथंभूतःउच्चकैस्तांडवितबाहुःउच्चैरेवोच्चकैः अव्ययसर्वनाम्नामकच्प्राक्टेरित्यक् तांडवंनृत्यविशेषः तांडवंजा

वृत्तयोः संपाते कथं राहुरस्तीति तत्राह पतनं पातः वृत्तयोः शरवृत्तक्रांतिवृत्तयोः पतनमेव पात इत्याहुर्गोलविदः पततो वृत्तयोः संपातस्ततः पात इत्युच्यते अत्र
पाते स्थितो राहुः आपतंतं आगच्छंतं अमृतद्युतिं चंद्रमसमास्ते गृहीतुमवलोपते किलेत्यागमे तमेवागमं विशेषणद्वारेणाह सुधेति सुधा अमृतं सुधावस्नान
दानहवनं च तेषामंशो विभागस्तत्र लालसस्तत्परः अत्र संपाते स्थितो राहुरमृतांशो ग्रहणनिमित्तस्नानादीनामंत्राम्ब्रह्मवरप्रदानान्ममभविष्यतीति चिंत
यन्नमृतद्युतिं गृहीतुमीस्त इति भावः चंद्रो हि अमृतद्युतिः राहुश्च सुधालालसः अत स्तं गृहीतुमीस्त इति युक्तं रविग्रहेपि चंद्रच्छायापासांनिध्यमस्त्येव ब्रह्मव
रप्रदानादिकं ब्रह्मपुराणादौ प्रसिद्धं अत आगमात्तत्र संपाते राहुरस्तीति भावः एतदेवोक्तं वराहेण यो सावसुरो राहुस्तत्र वरो ब्रह्मणा प्रदत्तः आप्यायनमुपरा

वृत्तयोः पतनमेव पात इत्याहुरत्र किल राहुरीक्ष्यते आपतंतममृतद्युतिं सुधास्नानदानहवनांशलालसः ४ सैंहिकेयगृ
हतामुपेयुषो दूरगो वियति वृत्तपातयोः ग्रासमेति न रविं न चंद्रमा गृह्यते स खलु पार्श्वगस्तयोः ५

गे दत्तहुतांशेन तेन भवितेत्यादि ४

एवं चेत्तर्हि प्रतिपर्वणि ग्रहणं कथं न स्यात्तत्राह सिंहिकाया अपत्यं सैंहिकेयो राहुस्तस्य गृहं तस्य भावः तां सैंहिकेयगृहतां उपेयुषोः प्राप्तयोः उपेयुरित्युपपूर्वं
सैतयोरुपेयुषोः इण् गतौ उपेयिवाननाश्वाननूचानश्चेति क्वसंतो निपातः वृत्तपातयोः शरवृत्तक्रांतवृत्तसंपातयोः दूरगो रविर्वियति आकाशे स्थितः ग्रासं नै
ति न प्राप्नोति न च चंद्रमा ग्रासं एति तयोर्वृत्तपातयोः पार्श्वगः समीपवर्ती स रविश्चंद्रश्च खलु निश्चितं गृह्यते राहुणेति शेषः गृह्यात् कर्मकर्तरि रूपं एतदुक्तं भव
ति शरवृत्तक्रांतिवृत्तयोर्द्वौ किल संपातौ एकश्चंद्रपातस्थानं द्वितीयस्तत्सप्तमं चेति तेद्वे अपि राहुस्थाने एकं राहोरपरं केतोश्चेति तयोर्दूरगो रविश्चंद्रो वा ग्रा
सं नैति शरबाहुल्यात् शरो हि राहुचंद्रबिंबमध्ययोरंतरं अतो मानैक्यार्धादूने शरे सत्येव ग्रहणं न त्वधिके एतद्ग्रहगणिते प्रसिद्धं एवं गणितेन राहुसद्भा

ह्रानैर्ऋतीदिक् अस्ति प्राच्यादीशारविसितेत्यादिनाराहोर्नैर्ऋतीदिक्प्रसिद्धा किंच अयंध्यानदानबलिभिःफलाप्तये अभीष्टफलसिद्धयेभवति तत्र ध्याने ब्रह्मयामलादौ करालवदनःखड्गचर्ममालीवरप्रदइत्यादि दानंगोमेदादिबलयःपूजाकृष्णपुष्पोपहाराद्यैस्तैःफलाप्तयेभवतिएभिःप्रमाणैराहुरस्तीतिभावः ननुयथान्येषांग्रहाणांक्रांतिवृत्तेमेषादिग्रहेपुभ्रमणमस्तितद्वद्स्यनास्तीतिचेत्तत्राह वेश्मचेति अस्यराहोःशशभृद्विमंडलक्रांतिमंडलमिथश्चतुष्पथंवेश्मचास्ति चत्वारःपंथानःसमाहृताइति चतुष्पथं द्विगोःक्लीवत्वं पूर्ववत्प्रत्यः विमंडलंविक्षेपमंडलंनामैकदेशेननामग्रहणं शशभृतःविमंडलंचक्रांतिमंडलंचतयोर्मिथःपरस्परंचतुष्पथंशशभृद्विमंडलक्रांतिमंडलमिथश्चतुष्पथंचंद्रस्यशरवृत्तक्रांतवृत्ततोर्यःसंपातश्चतुष्पथरूपस्तदेवास्यस्थानमित्यर्थःतच्चलने

वेश्मचास्यशशभृद्विमंडलक्रांतिमंडलमिथश्चतुष्पथं २ सोंधकारचरतांवहन्महीछायया विशतिसोममंडलं दीपितापरदलेंदुमंडलछाययासहचसूर्यमंडलं ३

नअस्यापिचलनंसिद्धं तदेवचंद्रस्यशरपातस्थानंग्रहगणितेप्रसिद्धं ननुदिक्देशकालावरणादिभेदान्नछादकोराहुरितिब्रुवंतीतिग्रहगणितेप्रत्यक्षंतद्विरुद्धाःस्युस्तादृशःसंति २ अतस्तत्समाधानमाह सराहुरंधकारचरतांवहन्महीछाययासहसोममंडलंविशति अंधकारेचरतीति अंधकारचरस्तस्यभावस्तथा भूछायाकिलांधकाररूपिणीसोप्यंधकारचरः अतस्तत्साहित्येनचंद्रमंडलंविशति आछादयतीत्यर्थः दीपितेति अंधकारचरतांवहन्संदीपितापरदलेंदुमंडलछाययासहसूर्यमंडलंचविशति दीपितमपरदलंउपरिस्थितदलंयस्यतत्दीपितापरदलंतच्चतदिंदुमंडलंचतस्यछायातथादर्शेकिलचंद्रस्योर्ध्वदलंप्रकाश अतोंधकाररूपस्यचंद्रमंडलाधोभागस्यछाययासहसोप्यंधकाररूपःसूर्यमंडलंप्रविश्यछादयतीति अनेनगोलगणितस्यस्मृत्यादीनांचविरोधःपरिहृतःतथाचोक्तंगोलाध्याये राहुःकुभामंडलगःशशांकंशशांकगःछादयतीनविंबमिति ननुशरवृत्तक्रांतिवृत्तयोःसंपाते

चंद्रस्य शरवृत्तक्रांतिवृत्तयोः संपात एव चंद्रपातस्तद्राहोः स्थानमिति किलोक्तं तस्मात्सङ्भांतरे द्वितीयः संपातस्तमपरं वृत्तपातं राहुरेति गच्छति तत्राप्यस्ति
तल्लोके केतुरुच्यते तदपि राहोः स्थानं कस्मात् स्वयंभुवो ब्रह्मणः समयात् वरस्य संकेतात् समयः शपथाचारकालसिद्धांतसंविदः इत्यमरः संपातद्वय
स्यापि समीपवर्तिनोश्चंद्रार्कयोर्ग्रहणसंभवः अतो ब्रह्मवरप्रदानात् संपातद्वयेपि राहोरवस्थितिरागमसिद्धा तद्वत् तस्मिन् द्वितीयसंपाते गतो राहुर्ज
गति इह लोके दिव्यरिष्टवत्सज्यते द्विविभवेदिव्यं तच्चनादिष्टं च तद्वत् दिव्यान्यरिष्टानि ग्रहनक्षत्रजानि तेषु मुख्यं दिव्यं केतुः अतोत्र दिव्यरिष्टशब्देन केतुर्गृ
ह्यते द्वितीयसंपाते गतो राहुरेव लोके केतुनाम्नोच्यते इति भावः यतो ब्रह्मपुराणादिषु विष्णुना सुदर्शनच्छिन्नं राहोः शिरो राहुः रपरं केतुरित्युक्तं अतएक

32

वृत्तपातमपरं स्वपाततो राहुरेति समयात्स्वयंभुवः मंदिरं तदपि तस्य तद्वत्स्यज्यते जगति दिव्यरिष्टवत् ८ पातवद्गतिव
शेन शीतगो रुच्चमस्तु फलदं किलेति चेत् अस्तु किंतु न हि तन्निवेशितं राहुवद्गृहपदे विरिंचिना ९ किंच गोलगणितानि यन्म
हीमध्यकेंद्रमधिकृत्य तेनिरे ॥

मेव शरीरं द्विधाभूतं राहुकेतुसंज्ञमिति ८ ननु एष शेषखगेत्यादिना यदुक्तं सर्वग्रहेषु मध्ये फलदातृत्वे चंद्रस्य मुख्य
त्वात्तस्यापि फलदातृत्वं तर्हि तदुच्चस्यापि तत्कथं न भवेदित्याशंक्य परिहरति शीतगोः उच्चं फलदं किलास्तु किंवत् पातवत् केन हेतुना गतिवशेन यथा प्रागु
क्तं चंद्रस्य फलदातृत्वमुख्यत्वात्तत्पातस्य फलदातृत्वं गतिसद्भावात् तद्वत्तदुच्चस्यापि गतिसद्भावात्फलदातृत्वं किलास्त्विति भावः इति चेदस्तु तर्हि किंतु हि
यस्मात्कारणात्तदुच्चं विरिंचिं विना ब्रह्मणा ग्रहपदे ग्रहपंक्तौ न निवेशितं न स्थापितं उच्चस्य ब्रह्मवराभावान्न फलदातृत्वमिति भावः एवं चंद्रोच्चस्य फलदातृत्वमाग
माभावान्निरस्य गोलयुक्त्यापि दूषयति ९ किंच युक्त्यंतरेणापि दूषणमस्ति यत् गोलगणितादीनि कर्माणि वृत्तादीनि महीमध्यकेंद्रं महीमध्यं वृत्तस्य मध्यं किल

वंप्रतिपाद्य अधुना संहिताजातकाभ्यामप्याह ५ स राहुः सूर्यवृद्धावर्गोचरफलैर्नेहीयते यतोसौ राशिवृत्ते वसति राशिवृत्ते क्रांतिवृत्ते वसतिः स्थानं यस्य स
तथा सूर्योहि क्रांतवृत्तेस्ति तत्र राहुरपि चंद्रपातत्वात् अतः संहितासु सूर्यस्य याहृशानि भाव फलानि तादृशानि राहोरप्युक्तानि अतो राहोर्भावगोचरफल
सद्भावाद्राहुरस्तीति भावः एवं जातकेपि रिष्टभंगेति स राहुः रिष्टभंगजनने कनायको भंगश्च जननं च भंगजनने रिष्टस्य भंगजनने रिष्टभंगजनने तयोरेकः
श्चासौ नायकश्च स तथा होराविदः ते तैर्होरिकाः तैः कैः कीर्तितः अपि तु स राहुः सर्वैर्जातकविद्भिः रिष्टभंगस्य रिष्टजननस्य च एक एव कर्ता कीर्तित एव त
था राहुश्चतुष्टयस्थो मरणाय निरीक्षितो भवति पापैरित्यादीनां रिष्टजननानां अजवृषभकर्किलग्ने रक्षति राहुः समस्तपीडाभ्यः इत्यादीनां च कर्त्तात्र

राशिवृत्तवसतिः स सूर्यवृद्धावर्गोचरफलैर्नहीयते रिष्टभंगजनने कनायको होरिकैरपि सकैर्नकीर्त्यते ६ एष
शेषखगपाततुल्यतां नेति चंद्रखविपर्वगर्वितः जातकादिषु यथेंदुमंदिरात्कितथा न फलमन्यराशितः ७ ॥

हांतरानपेक्ष एक एव कीर्तितः अतोसावपि जातकेनापि स्वीकृत इति भावः ६ नन्वसौ किल चंद्रपातस्तस्य चेद्ग्रहत्वं तर्हि भौमादिपातानामपि कथं न ग्रहत्वमि
तिचेत्त्राह एष चंद्रपातः शेषखगानां भौमादीनां ये पातास्तत्तुल्यतां नैति न प्राप्नोति यतो यं चंद्रखविपर्वगर्वितः चंद्रखविपर्वणा गर्वितः चंद्ररविग्रहणकर्तृ
त्वेन गर्वं प्राप्तः यतस्तस्य संनिहितावेव चंद्रार्कौ ग्रासं प्राप्नुतः न त्वितरेषां अतोसावन्यपातसाम्यं न प्राप्नोतीत्यर्थः किंच जातकादिषु जातकसंहितास्वरशा
स्त्रयामलादिषु यथा इंदुमंदिराच्चंद्रराशेः फलं तथान्येषां भौमादीनां राशितः फलं नास्ति अतो यथा सर्वत्र फलानि चंद्रराशेस्तथा न तथा तराशेरपि अतश्चासौ
शेषपातसाम्यं नैति ७ एवं प्रथमे संपाते राहुस्थितिमुक्त्वा द्वितीये पितत्स्थितिमाह ॥ ० ॥ ० ॥ ० ॥ ० ॥

भावः तथा चोक्तं एकत्रस्तु ग्रहाः सर्वे एकतः शशलांछनः ततोधिकतरश्चंद्रस्तस्माच्चंद्रं परीक्षयेदिति ११ अन्नयः संपातः स एव राहुरित्यर्थे प्रमाणांतर
फलमाह किंच प्रमाणांतरमप्यस्ति जिष्णुजो ब्रह्मगुप्तः सोमः प्रसिद्धः रोमको मुनिः मयो मयासुरः आदिशब्देन पितामहवसिष्ठादीनां ग्रहणं नन्वेते तांत्रिकाः श
ल्पप्रणेतारः राहुपातयोर्नामनी पर्यायेणैव विदधुः पातपर्यये राहुशब्दं प्रयुंजते घटकलशवत् तथा चोक्तं कुमुदिनीपतिपातो राहुमाहुरिहकेपि तमेवेति अतो
ग्रः पातः स एव राहुरिति सोमरोमकादीनामुक्तेर्वृत्तसपात एव राहुरित्यर्थः ननु पात एव राहुर्भवतु उच्चस्य फलदातृत्वाभावे किमायातं तन्नस्तुच्चहेतुमिति कारणा
नुपन्यस्तं तदपि सूक्ष्मदृष्ट्या विचार्यमाणे संदिग्धमित्याशंकां मनसि धृत्वा तन्निरासे युक्त्यंतरमाह १२ तदुच्चं यदि दृश्यमभवेत्फलदातृत्वे स्वतंत्रं भवेत्तर्हि सो

किंचागोलगणितेषु जिष्णुजः सोमरोमकमयोदयोपि च पर्ययेण ननु राहुपातयोर्नामनी विदधुरेव तांत्रिका १२॥
अर्कमर्कजकुजार्यतुंगतां किं नयंति यदि तद्धि दृश्यमभवेत् कल्पनात दियमुच्चमुच्चरन् कोपि रोपितफलं न च श्रुतः १३

मरोमकादयः अर्कजकुजार्यतुंगतां अर्के किं नयंति आर्यो गुरुः अर्कजकुजार्याणां तुंगं तस्य भावस्तथा शनिभौमबृहस्पतीनां शीघ्रोच्चं सूर्य एवेति कथं
वदंतीति यद्येषां सूर्य एव शीघ्रोच्चं तदा तस्य फलदातृत्वे दृश्यत्वं न स्यात् तत्तस्मात्कारणादियं कल्पना उच्चं हि कल्पनामात्रं मंदफलानि साधनायेति उक्तं
च गोलाध्याये यः स्यात्प्रदेशः प्रतिमंडलस्य दूरे भुवस्तस्य कृतोच्चसंज्ञा सोपि प्रदेशश्चलतीति तस्मात्प्रकल्पितात्तुंगगतिर्गतिज्ञैरिति अत उच्चस्य कल्प
नामात्रत्वान्न फलदातृत्वं तर्हि पातोपि शरसाधनाय कल्पनामात्रं कथं तस्यापि फलदातृत्वं भवेदित्याशंकायामाह उच्चमुच्चरन्निति उच्चं रोपितफलमुच्च
रन् कथयन् कोपि न श्रुतः रोपितं फलं यस्मिन् तत्तथा उच्चस्य फलं कुत्रापि न श्रुतं तस्य फलश्रवणाभावात्कल्पनामात्रत्वमिति भावः अतः पातस्य ग्र

केंद्रमुक्तमिति सिद्धांतोक्तेः तत् अधिकृत्य प्राग्गम्येन धृत्वा ते निरे विस्तृतानि कर्मकर्तरि रूपं यतः सर्वेषां कक्षावृत्तनाडिकावृत्तादीनां मध्यं भूगर्भ एव तद्वृत्त स्तस्मिन् भूगर्भे स्थितो नरः पातवर्त्मनि पातमार्गे स्थितं स्फुटं शशिनं अनुच्चहेतुमीक्षते पश्यति अपिरेवार्थे विगतः उच्चहेतुर्यस्मात्सौ तथा उच्चस्य हेतुं विनापीत्यर्थः एतदुक्तं भवति फलभंग्या कक्षावृत्तस्य भूगर्भो मध्यं प्रतिवृत्तस्य मध्यं भूगर्भादुच्चफलज्यांतरे तत्र प्रतिवृत्ते मध्यमचंद्रस्तदुच्चं च तन्मध्ये चंद्रकेंद्रं कक्षावृत्ते तु स्फुटचं द्रः तत्रैव तस्मात्तस्य उक्तं च चंद्रस्य कक्षावलये हि पात इति अतो भूगर्भस्थो द्रष्टा कक्षावृत्ते स्फुटचंद्रं पश्यति तत्रैव तस्मात्तस्य अतो न योरेकवृत्तचारित्वाच्चंद्रदर्शनं तस्मा त्स्यापि फलसाध्यत्वं न तदुच्चस्य अत उक्तं अनुच्चहेतुमिति एतत् ग्रंथकृतोक्तं जनानां व्यामोहनमात्रं वास्तवं तु नैतत् तथा हि यद्यपि प्रतिवृत्तस्य नीचोच्चवृत्तस्य वा य

तद्वृत्तः शशिनमीक्षते स्फुटं त्वनुच्चहेतुमपि पातवर्त्मनि १० अत्र येन विकलादलार्धमप्यन्हि यांति फलमस्तु किं ततः तावदेव
फलगौरवं गतिर्यावती त्वाधिफलः कलानिधिः ११

उच्चस्यानंतरदेवोच्चमित्यस्ति तथाप्युच्चहेतुं विना कक्षावृत्ते स्फुटचंद्रदर्शनं कथं स्यात् स्फु टचंद्रस्य कारणमुच्चं भवत्येव उक्तं च सूर्यसिद्धांते अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः शीघ्रमंदोच्चपाताख्या ग्रहाणां गतिहेतवः इत्यादि अतोऽनुच्चहेतु मिति यदुक्तं तन्न चतुरस्रमिति प्रतिभाति अत एव युक्त्यंतरं वक्ष्यति अर्कमकुजेत्यादि अथ यदुक्तं गतिवशेन तद्दृढयन् अन्यपातानां फलहानत्वासंभवं प्रति पादयन् चंद्रस्य फलगौरवं द्रढयति १० अत्र ये भौमादीनां पाताः विकलादलार्धं विकलाया दलं तदर्धमपि अन्हि दिवसेन यांति न गच्छंति तेभ्यः फलं किंतु अपि तु ना स्तु न हि ते वर्षशतेनापि कलामात्रं चलंति अतो यावती गतिस्तावदेव फलगौरवं यथा यथा गतिरधिका तथा तथा फलगौरवं अल्पकालेनैव फलवैचित्र्यात् इ ति हेतोः कलानिधिश्चंद्रमाः सर्वग्रहेभ्योऽधिफलः आधि अधिकं फलं यस्मात्सोऽधिफलः अन्यग्रहाणां गतियोगोऽपि चंद्रगतिसमो न स्यादतोऽसावधिकफलः इति

ग्रहणेवश्यंतत्सांनिध्यात् अतश्चराहोर्गतिसद्भावात् ग्रहत्वंफलदातृत्वंचसिद्धं १५ एवंराहोर्ग्रहत्वादिकंसंस्थाप्यानयैवयुक्त्याकेतोरपिग्रहत्वंसंस्थापय
तिद्रुतविलंबितांप दादिवि आकाशेतत्परं तस्यराहोः परं पश्चिमकापः उदयंएति तदाकेतुरपिप्रतिवासरं चरतीतिस्यात् एतदुक्तंभवति वृत्तपात्तमपरामित्यादि
नाराहोः षड्भांतरेयोद्वितीयः संपातस्तस्यग्रहंसकेतुरितिप्रतिपादितं तत्सांनिधावपियद्ग्रहणं तदपिप्राग्वज्ज्वलति अतः केतोरपिगतिः सिद्धा गतिसिद्धौसत्यांग्रहत्वं
फलदातृत्वंचसाधयति भवतीतिगतिंविनाग्रहएवनभवतिकथंभूतः जगतिइहजनेकर्मविपाकवदावदः कर्मणोविपाकस्तंवदतीतिकर्मविपाकवदावदः पचा
दित्वादच् वरिचलिपतिवदीनांवाद्वित्वमभ्याक्काभ्यासस्येतिद्वित्वमभ्यासस्यात्वंच यस्यहिगतिरस्तिसएवग्रहोभवति अतोसौपूर्वकर्मविपाकजनितस्यशुभाशुभस्य



उदयमेतियदाद्विवितत्परंचरतिकेतुरपिप्रतिवासरं भवतिनग्रहएवगतिंविनाजगतिकर्मविपाकवदावदः १६ परिहरंत्युपरा
गपरागतंतमउपप्लवएवसकिंग्रहः इतिमणित्थवचांसिविवृण्वतामतमतस्यतमोजमहीभुजा १७

सूचकोभवेत् तस्मात्केतोरपिग्रह
त्वंफलदातृत्वंचसिद्धं १६ ननुग्रहणेतमएवप्रत्यक्षंदृश्यतेसकथंग्रहोभवेदितिपरमताशंकांभोजराजेनदूषितेत्याह द्रुतविलंबितं उपरागेग्रहणेपरागतंप्राप्तंत
मः उपप्लवोरिष्टमेवेतिपरिहरंतित्यजंतिसकिंग्रहः सग्रहएवनभवतीतितथाहि चंद्रार्कयोर्ग्रहणेस्वाभाविकद्दीप्तेरवरोधकंमलसंयत्तमोदृश्यतेतदुत्पातएव
प्रकृतेरन्यत्वमुत्पातइत्युक्तत्वात् परिवेषादिवत् अतस्तत्तमउत्पातएवेतिपरिहरंति आचार्याइतियन्मतंतत् मणित्थवचांसिविवृण्वतामणित्थवाक्यानांविवर
णंकुर्वताभोजमहीभुजाभोजराजेन अतस्तत अछिद्यत तत्सूत्रानुकरणेकर्मणिलङ् एतन्मतंमणित्थवाक्यविवरणेभोजराजेननिराकृतमित्यर्थः तद्यथा उत्पातो
हिगणितागताच्चोपलभ्यते ग्रहणंहिसम्यगुपलभ्यते अतोनोत्पातः किंच उत्पातोहिदेशविशेषेणयत्रक्वचनदृश्यते चंद्रग्रहणंतुसर्वदेशे अतश्चनोत्पातइतिग

इत्थंयुक्तं उच्चस्य फलदातृत्वाभावे ग्रंथकृत्ता किमर्थमेतावत्प्रपंचितं पर्यवसानंतु आगम एव अतः प्रथमत एव तत्रागमाभावः कारणं कथं न वक्तव्य
मिति १३ ननु दिनादेराधिपत्यं तस्य पातस्य कथं नास्तीति तत्राह शालिनी वृत्तं अहोरात्राहोरहोरात्रवर्षाधिपत्यं नास्ति अहोरात्रं वारः वर्षं वत्सरः तौ मा
सहोरादीनामुपलक्षणं तेषां स्वामित्वं राहोर्नास्तीति सत्यं सत्यमेवेति व्यंग्योक्तिः तथापि सर्वव्योमगानां अधीशौ पुष्पवंतौ चंद्रार्कौ यस्य राहोः छायापि
नष्टिं चूर्णयति पिष्टपेषणे तस्य राहोः स्वामिता या विनष्टिः विनाशः क्वास्ते न कुत्रापीति एकयोक्त्या पुष्पवंतौ दिवाकरनिशाकरौ विसमरः ग्रहाधीशौ चंद्रार्कौ य
स्य छायामात्रं विद्धलयति तस्य स्वामित्वं नास्तीति वक्तुं न शक्यते अतः पारंपर्येण दिनवर्षादीनामप्याधिपत्यं तस्यास्त्येवेति भावः अथ गतिवशात्फलमि

राहोर्नाहोरात्रवर्षाधिपत्यं सत्यं सर्वव्योमगानामधीशौ यस्य छाया पुष्पवंतौपि नष्टिं क्वास्ते तस्य स्वामिता या विनष्टिः १४
प्रतिदिनं खचरः प्रचरन् फलं किमपि यच्छति चारफलो हि सः ग्रहणर्क्षगएव स चेन्न किंचलति किंचिदुपप्लव एव तत् १५

ति मति पारयन् १४ राहोर्गतिसद्भावे प्रमाणमाह द्रुतविलंबितं खचरः प्रतिदिनं प्रचरन् सन् किमपि फलं यच्छति हि यस्मात्कारणात्स खचरः चारफ
लः चारेण गत्या फलं यस्यासौ तथा यस्मात्खचरः चारफल इत्युच्यते तस्माद्यथा यथा यो ग्रहः किंचिच्चलति तथा फलं यच्छतीत्यर्थः स राहुः ग्रहणर्क्षगएव
वास्ति ग्रहणेन क्षत्रे स्थित एवास्ति नान्यत्र इति प्रकृतिकल्पे विपक्षे प्रत्यक्षबाधमाह स चेदिति स राहुः चेद्ग्रहणर्क्षगो नास्ति तर्हि उपप्लवः किंचित् किंचल
ति उपप्लवो ग्रहणं एतदुक्तं भवति ग्रहणे राहुसान्निध्यमस्त्येवेति प्राक्प्रतिपादितं ग्रहणं हि किंचित्प्रतिमासं सार्धैकभागप्रमाणेति षण्मासैर्नवभागैः ए
ष्ठतत्प्रचलत्येव तत् एकं ग्रहणं यस्मिन्नक्षत्रे दृष्टं तत्परं तत्स्पृष्टनक्षत्रे तत्परमपि तत्स्पृष्टनक्षत्रे इति प्रत्यक्षं दृश्यते अतो ग्रहणाच्चलनं सैव राहुगतिः ॥

सिद्धांतेविरोधपरिहारः दिनंसुराणामयनंयदुत्तरंनिशेतरत्स्यांहितुकैःप्रकीर्तितं दिनोन्मुखेर्केदिनमेवतन्मतंनिशातयातत्फलकीर्तनायतदितिर१९अथैतदे
वस्पष्टयति उपजातिकाव्याख्यातप्रायमेतत् हि यस्मात्कारणात्कर्कगते अर्केसतिसुराणांदेवानां अपराह्णः स्यात् अन्ह अपरं अपराह्णःदिनोत्तरार्द्धं अस्य
फलंपुनःफलंतुरात्रिवदाहुः नक्रंमकरेगते अर्केसतिएषांदेवानां अपररात्रंस्मरंतिरात्रेःअपरं अपररात्रः अहः सर्वैकदेशेत्यकरात्रान्हाहाःपुंसीतिपुंस्त्वंएत
त्परंएतस्मात्परंवासरवत्स्मरंति संहिताकारादयःअस्यदृढीकरणार्थंएतदृष्टांतमन्यत्राप्याह२०उपजातिका किलेत्यहं तेर्केअतएवहेतोःदशमीष्वपिप्राक्पू
र्वकापालिकोवेधविधिरुक्तःनिशार्धाद्दिनार्धपर्यंतंप्राक्कपालंदिनार्धान्निशार्धपर्यंतंपश्चिमकपालंग्रहगणितेप्रसिद्धंतयोःकपालयोर्भवःकापालिकःअ



कर्कंगतेर्केहिसुरांप— —राह्णःफलंपुरारात्रिवदाहुरस्य नक्रंगतेचापररात्रमेषामेतत्परंवासरवत्स्मरंति२०अतश्च
केश्चिद्दशमीष्वपिप्राक्कापा लिकोवेधविधिःकिलोक्तः मासोन्यस्सवन्नियमव्रतादौपित्र्येनिशार्धेसतिपूर्णिमास्या२१॥

यंभावः दशमीशेषसंयुक्तोयदिस्यादरुणोदयः वैष्णवैस्तुनकर्तव्यंतद्दिनेकादशीव्रतमित्यादिवाक्यैररुणोदयेदशम्याविद्धैकादशीयथावैष्णवैस्त्यज्यते
तद्वत्केश्चिन्निंबादित्यसंप्रदायिभिरर्धरात्रेदशम्याविद्धैकादशीत्यज्यते अर्धरात्रादुपरिउत्तरदिनप्राप्तेः तद्वाक्यंच अर्धरात्रेपिकेषांचिद्दशमीवेधइष्यतेअ
तश्चधर्मशास्त्रेपिव्याशोचार्त्तवादिषुकेचिदर्धरात्रादुपर्युत्तरदिनमिच्छंति अतश्चविष्टिरंगारकश्चैवव्यतिपातश्चवैधृतिःप्रत्यरिर्जन्मनक्षत्रंमध्यान्हात्परतः
शुभमित्यादिवाक्यानामवकाशःअपिचामासोन्यइति एवमनेनैवहेतुनापौर्णमास्यांपित्र्येनिशार्धेसतिनियमव्रतादावन्योमासःस्यात् पितृणामिदंपित्र्यंपि
तुर्यत् नियमाःचातुर्मास्येशाकदधित्यागादयःव्रतानिकार्तिकव्रतादीनितेषामारंभःपूर्वमाससस्यपूर्णमासीमारभ्यैवयतस्तत्रपितृणांनिशार्धंतयाहिचं

पितागतमत्यसं आगमश्च ब्रह्मणो वरप्रदानादि ग्रहचारे तत्फलकथनं च लोकप्रसिद्धिश्च राहुकृतं ग्रहणं स्यादागोपालांगनादिसिद्धमिदमिति ब्रह्मगुप्तः अन्या
अपि तु रस्ताद्दृक्तायुक्तयश्च इत्यादिप्रमाणैस्तन्मतं भोजराजेन निराकृतमिति भावः न त्वागमप्रामाण्येन राहोः सिद्धिरस्ति परं तु दिग्देशकालावरणादिभेदैर्गोलवास
नायां सिद्धिर्नास्तीति तत्राह १७ उपजातिका अथापि यद्यपि असौ राहुः केवलायां एकस्यामेव गोलवासनायां सिद्धिं नायाति तदपि नोऽस्माकं प्रियं मास्तु गोलवासन
या सिद्धिः तत्कथं अर्कायनाभ्यां सूर्यस्योत्तरदक्षिणायनाभ्यां सुराणां देवानां द्युरात्रमहोरात्रं अवासनं वासनावाह्यं भवता त्वयैव किं न भेजे किं न स्वीकृतं अपि तु
स्वीकृतमेव द्यु इत्यव्ययं दिनवाचकमिति क्षीरस्वाम्यादयः एतदुक्तं भवति मेरुगतानां देवानां नाडिकामंडलं क्षितिजं तस्मादुपरिस्थिताः क्रांतिवृत्ते मेषादयः षट्

अथाप्यसौ केवलवासनायां नायाति सिद्धिं तदपि प्रियं नः अवासनं किं न सुरद्युरात्रमर्कायनाभ्यां भवतैव भेजे १८ सि
द्धांतपक्षस्तु परं दिनार्धान्निशा निशार्धात्परतो दिनश्रीः एवं पुराणे गणिते च साम्यमर्कायनाभ्यां सदसत्फलेषु १९

राशयो दृश्याः तुलादयः षट् अधःस्थिताः अदृश्याः अतो मेषादिषड्राशिस्थितेऽर्के देवानां दिनं तुलादिस्थिते रात्रिरिति द्युरात्रं गोलवासनासिद्धं शिशिरपूर्वं
ऋतुत्रयमुत्तरं ह्ययनमाहुरहश्च तद्दामरमित्यादिना पुराणादिषु उत्तरायणं दिनं दक्षिणायने रात्रिरित्यागमस्याविरोधभयादिदं वासनाबाह्यमपि द्युरात्रं त्वया
पि स्वीकृतमतोऽस्माभिरप्येकमिदं अवासनमागतभयात्स्वीकृतमिति भावः १८ अथानयोर्विरोधं परिहरति उपजातिका सिद्धांतपक्षस्त्वयं सिद्धांतसाम्यमा
श्रय इति दिनार्धात्परं निशा निशार्धात्परतो दिनश्रीर्दिनलक्ष्मीर्दिनमेवेति यावत् एवं सत्यर्कायनाभ्यां सकाशात्सदसत्फलेषु विषये पुराणे गणिते च साम्यं स्या
त् एतदुक्तं भवति गणिते किल कर्कसंक्रमे दिनार्धं तत्परं रात्र्युन्मुखत्वाद्रात्रिरित्युच्यते एवं मकरसंक्रमे निशार्धं तत्परं दिनोन्मुखत्वाद्दिनमेवेति तथा च

समाप्तिप्रतीतेश्च २३ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृन्दावनटीकायां विवाहदीपिकायां राहुसत्ताध्यायः सप्तमः ७ अथ षड्वर्गादिफलानि विविक्षुस्तावत्तन्वादिभावानयनं जातकशास्त्रीयमप्यत्र सौकर्यार्थमाह नवशालिनी वृत्तानि लग्नादर्कवद्द्वात्रिखंडं कृत्वा तस्य घटीभिर्भूयः पुनर्व्यस्तैर्लग्नं कार्यं तद्यथा लग्नमेव सूर्यं प्रकल्प्य अयनांशान्दत्वा तस्माच्चरं कृत्वा रात्रिदलं कार्यं तन्मिश्रकालं प्रकल्प्य तेस्मात्सायनांशलग्नात् लंकोदयैर्भोग्यादिकं कृत्वा लग्नं कार्यमिति अर्थात् चतुर्थलग्नं स्यात् तेहू लग्ने चक्रार्धोने षड्भात्यूने कार्ये एवं तेतत्कालं अस्तमध्यान्हलग्ने क्रमेण जायेयातां उत्पन्ने भवेतां १ लग्नं तुर्याच्चतुर्थलग्नाच्छोध्यं तुर्यमस्तात्सप्तमलग्नाच्छोध्यं अस्तमध्याद्दशमलग्नाच्छोध्यं मध्यमेंद्रौ विलग्ना

अथ षड्वर्गाध्यायः कृत्वालग्नादर्कवद्द्वात्रिखंडं भूयो व्यस्तैस्तद्घटीभिर्विलग्नं चक्रार्धोने ते च तत्कालं एवं जायेयातामस्तमध्यान्हलग्ने १ लग्नं तुर्यात्तूर्यमस्ताद्दिशोध्यं मध्यादस्तं मध्यमेंद्रौ विलग्नात् शेषन्त्र्यंशान् द्विद्विरायेषु दद्यादेवं भावाः सं- धिरेतद्दलैक्यं २ संधौ खेटो निःफलो भावभागेस्तुल्यः सम्यक् भावपंक्तिं व्यनक्ति ॥

इ छोध्यं इंद्र स्येयमेंद्रौ पूर्वादिकृतत्र विलग्नं तद्देवलग्नमित्युच्यते तस्मान्मध्यं शोध्यं शेषाणां चतुर्णामपि पृथक्पृथक् त्र्यंशान् आद्येषु लग्नादिषु द्विर्द्विवारं दद्यात् एवममुना प्रकारेण भावाः स्युः तद्यथा लग्नं चतुर्थाद्दिशोध्य तस्य त्र्यंशं लग्ने दत्वा द्वितीयभावो भवेत् पुनरपि तमेव त्र्यंशं द्वितीयभावे दत्वा तृतीयभावो भवेत् एवं तुर्यमस्ताद्दिशोध्य तत्र्यंशं तुर्ये दत्वा पंचमषष्ठौ भावौ स्तः एवमष्टमनवमादयः एतयोर्दलैक्यं संधिः स्यात् तद्यथा द्वादशभावलग्नयोरैक्यं दलं तन्मध्यवर्ती संधिः स्यात् एवं लग्न द्वितीययो द्वितीयतृतीययोरित्यादि २ अथ ग्रहफलानां भावकृत्सनवशात्तारतम्यमाह संधौ स्थितो ग्रहो निःफलः शुभफलोऽस्य शुभफलोऽपि भावभागेस्तु

इस्योर्ध्वभागे वसंतः पितरः स्वमस्तकोपरि दर्शे सूर्यं पश्यंति अतस्तत्र दिनार्धं एवं पूर्णमास्यां सूर्यस्य अधोर्ध्वस्थितत्वाद् अर्धरात्रं कृष्णपक्षार्द्धे सूर्योदयः शु क्लपक्षार्धे स्तमय इति पित्र्यमानस्य वासनया सिद्धांते प्रसिद्धं २१ अथ राहुसद्भावे प्रमाणांतरमाह द्रुतविलंबितं तत्तस्मादितिहेतोः स राहुर्विद्यत एव परैरन्यै र्हेतुभिः किं अन्ये हेतवस्तिष्ठंतु तमेव हेतुमाह रुधिरेति रुधिरबिंदुवपुषे ये यातधाय्ये तामसकीलककेतवो बिलसंति ते स्वपितृराहुसमर्थनहेतवः स्युः रुधिर स्य बिंदवो यस्मिन् तद्रुधिरबिंदु तच्च तद्वपुश्च तत्तथा वपुः शरीरं तामसकीलकाश्च ते केतवश्च ते तथा स्वस्याः पिता च स्वपिता तस्य समर्थनं संस्थापनं तत्र हे तवस्ते तथा तामसकीलकाख्या ये केतवस्ते राहुसुता इत्युक्तत्वात्तेषां केतूनां पिता राहुरस्तीत्यर्थः तथा चोक्तं वराहसंहितायां शतजानलानुरूपाः त्रिशूलताराः

तदितिविद्यत एव सकिं परै रुधिरबिंदुवपुर्विलसंति ये॥ तदिह तामसकीलककेतवः स्वपितृराहुसमर्थनहेतवः २२ यः पर्वगस्तस्य गतिर्न दृष्टा सैव ग्रहत्वेपि महत्प्रमाणं विलोमगामी विधुपात एव तस्मान्महोराहुरिति प्रतीतः २३ इतिविवाह वृंदावने राहुस्तताध्यायः सप्तमः ७

रुजात्मजाः षष्ठिः नाम्ना च कौंकुमारस्ते सौम्याशासंस्थिताः पापाः त्रिंशच्चाधिकाराहोस्ते तामसकीलकाइ तिख्याताः रविशशिगा दृश्यंते तेषां फलमर्कवद्वोक्तमिति २२ राहोर्ग्रहत्वं प्रागुक्तप्रमाणेन भयंतरेणाह यदुपति उपजातिका यः पर्वगो ग्रहणगो राहुस्तस्य गतिः साक्षान्न दृष्टा किंत्वनुमानेन ग्रहणक्षणग एवेत्यादिना अतो गतिरस्तीत्यनुमानसिद्धं सैव गतिर्ग्रहत्वे महत्प्रमाणं हि यस्मात्कारणादेव विधुपातो राहुर्विलोम गामी सदा वक्रचारी अस्ति यथा चंद्रार्कौ सदानुलोमगामिनौ तथैवायं सदा विलोमगामीति तथा च भूपालः राहुकेतू सदा वक्रौ शीघ्रगौ शशिभास्कराविति तस्मा न्महोराहुरिति प्रतीतः प्रख्यातः शेषः एतद्वाक्यं ग्रंथकृतो न भवतीति प्रतिभाति प्रतिदिनखचर इत्यादिना पौनरुक्त्यापत्तेः तदितिविद्यत इत्यनेनाध्याय

रिकाज्ञानं विविसुस्तदर्थं तावत्संक्रांतिज्ञानमात्रेण सूर्यज्ञानं लग्नांशज्ञानं चाह ५ अंतर्मध्ये वासराः अंतर्वासराः संक्रांत्योरंतर्वासरास्तैस्तथा तैर्युद्युवृंदाहर्गणाद्यद्भादिराश्यादि लब्धं तत् मेषादिराशिभिर्मिश्रं युक्तं भानुः स्यात् तद्यथा संक्रांतिमारभ्य इष्टदिनपर्यंतं यो गतो दिनगणः स पूर्वसंक्रांतिमारभ्य उत्तरसंक्रांतिपर्यंतं ये मध्यवर्तिनो दिवसास्तैर्भक्तः तस्माद्राश्यादि यल्लब्धं तत्संक्रांतिवशेन गतराशिभिर्युक्तं राश्यादिको भानुः स्यात् अथ लग्नांशज्ञानं भक्ता इति लग्नस्य भुक्ता ये नवांशास्ते हि भिर्निघ्ना रामैर्भक्ताः त्रिंशद्दशा भागा भवेयुः तद्यथा यथोक्तविधिना लग्नशुद्धिं नवांशशुद्धिं च विचार्य अजमृगाननतौलीत्यादिवक्ष्यमाणोक्त्या लग्नादिमनवांशमारभ्य इष्टनवांशात्पूर्वं ये नवांशा भुक्तास्ते दशघ्नास्त्रिभक्तास्तल्लग्नराश्याधो भागाः स्युरिति राश्यादि लग्नं स्यात् ६ अथाभ्यां कालमाह रा



संक्रांत्यंतर्वासरैर्यद्युवृंदाल्लब्धं भानुर्भादिमेषादिमिश्रं भक्ता रामैर्लग्नभुक्ता नवांशा दिग्भिर्निघ्नास्त्रिंशदंशा भवेयुः ६ रात्रौ भानुर्भार्धयुक्सायनांशस्तन्वंशाः स्वोदयघ्नाः ६ यत्ते त्रिंशद्भक्ता भुक्तभोग्याः फलाद्यास्ताद्दक्कालो मध्यगः स्वोदयाढ्यः ७

त्रौ भानुर्भार्धयुक् षड्राशियुक्तः दिवा तु यथास्थित एव सायनांशः अयनांशसहितौ दिवारात्रौ च अर्थाल्लग्नं च सायनांशं कार्यं तन्वर्कांशाः क्रमेण भुक्तभोग्याः पृथक् स्वोदयघ्नाः त्रिंशद्भक्ताः पलादि स्यात् अर्थाद्भुक्तं भोग्यं च तद्यथा तनोर्लग्नस्य भुक्तभागा लग्नोदयेन गुणिताः त्रिंशद्भक्ताः फलादि भुक्तं स्यात् एवमर्कस्य भोग्यभागाः अर्कोदयेन गुणितास्त्रिंशद्भक्ताः पलादिकं भोग्यं स्यादिति ताद्दक्कालः स्वोदयाढ्यो मध्यगः स्यात् तदिव द्दश्यते सौ ताद्दक् स चासौ कालश्च ताद्दक्कालः पलादिभुक्तभोग्यकालः स्वोदयैर्मध्यवर्तिभिरुदयैराढ्यः मध्यगः लग्नार्कयोर्मध्यवर्ती कालः स्यात् ७ अथ लग्नकालमुक्त्वा लग्नात्कालहोरामाह स चासौ कालश्च तत्कालः तत्काले र्कः तेन न्यूनं तच्च तल्लग्नं च तस्य अंशाः तेषां पिंडः समूहः पंचघ्नोणिभिः पंचदशभिर्भक्तः भुक्तहोराः स्युः तदीशाः तासां होराणामीशा भास्वदा

त्यखेटः सम्यक्परिपूर्णाभावपंक्तिं भावफलं व्यनक्ति प्रकटयति ददातीति यावत् संधेः सकाशादूनाधिक्यमाप्तः प्राप्तः खेटगतैष्यभावाधीनं स्वपाकं संद
धाति संधेरूनो ग्रहो गतभावजं फलं अधिकस्त्वेष्यभावजं फलं ददातीत्यर्थः नन्वयं पादोधमेति त्रैराशिकेन कल्प्य एवमनेन विधिना यत्र भावे स्थितो ग्रहस्तत्फ
लं भावजं लग्नराशेः सकाशाद्यावति राशौ स्थितो ग्रहस्तत्फलं स्वाभाविकं ३ अनयोर्विभेदं सति निर्णयमाह भावेन भावकल्पनया ये जाता गुणास्तेषां गुणानां
नांगीकारः न स्वीकारः तस्माद्भावकल्पनवशाद्ये दोषास्तेषां दोषाणां तत्त्वतः साकल्येन त्याग एव अत्र प्रथमस्योदाहरणं भावेति स्वाभाविके लग्नात्सप्तमः स
प्तसप्तिः सूर्यो भावव्यक्तौ सत्यां भावकल्पनया अष्टमं गतोपि त्याज्य एव सप्तसप्तयोश्वाः यस्यासौ तथा एतदुक्तं भवति सूर्यः किल सप्तमो दुष्टः अष्टमः शुभः

संध्येरूनाधिक्यमाप्तो गतैष्यभावाधीनं संदधाति स्वपाकं ३ नांगीकारो भावजानां गुणानां तद्दोषाणां तत्त्वतस्त्याग एव भाव
व्यक्तावष्टमत्वं गतोपि त्याज्यो लग्नात्सप्तमः सप्तसप्तिः ४ प्रत्याख्येयः पाक्षिकोपीह दोषः सम्यग्व्याप्यो यो गुणः सोनुगम्यः
यस्माद्दंशे गेहभावाधिकः सन् न स्याद्भूत्यै भार्गवः पंचमोपि ५॥

स्वाभाविकेन सप्तमः सूर्यः यदि भाववशादष्टमो भवेत्तदा सो शुभोपि त्या
ज्य एव ४ अथ सद्युक्तिकं द्वितीयोदाहरणमाह यस्मात्कारणाद्दोषः पाक्षिकोपि प्रत्याख्येयस्त्याज्यः गुणस्तु यः सम्यग्व्याप्योसावनुगम्यः अनुसरणीयः सम्य
ग्व्याप्नोतीति सम्यग्व्यापी सर्वसंमतः पक्षांतरगतोपि दोषस्त्याज्यो गुणस्तु सर्वसंमत एव ग्राह्य इत्यर्थः तस्मात्कारणात्पंचमोपि भार्गवः अंशाभोगे गेहभावा
द्गृहभावभागेभ्यः अधिकः सन् भूत्यै शुभाय न स्यात् अयं भावः पंचमः शुक्रः किल शुभः षष्ठोशुभः भावादुपयतो यो संधीतदंतर्वर्तिनो शास्तेतद्भावस्य अतः
पूर्वसंधेः सकाशादंशैरधिको ग्रहो ह्युत्तरभावस्थितो भवेत् अतः स्वाभाविकेन पंचमः शुक्रो यदि भाववशेन षष्ठो भवेत्तथापि त्याज्य एवेति अथ लग्नात्तद्

लवारप्रवृत्तिः लंकायां पत् क्षितिजं तदन्यदेशे उन्मंडलं उत्तरगोले स्वक्षितिजादूर्ध्वमुन्मंडलं दक्षिणे त्वधः तदंतरं चरमेव अत उत्तरगोले मध्यरेखायां स्वो
दयादुपरि चरपलैर्वारप्रवृत्तिः दक्षिणे तु पूर्वं मध्यरेखास्वदेशोदययोरंतरे देशांतरपलानि तैः पलैः रेखायाः पश्चिमदेशे ऊर्ध्वमुदयः पूर्वदेशे त्वधः अतो
नेन विधिना चरदेशांतरयोः संस्कारवशादूर्ध्वमधो वा वारप्रवृत्तिरिति अत एवोक्तं सिद्धांते अर्कोदयादूर्ध्वमधश्च तस्मादि तथा च संहितायां सप्तर्षिभिश्च उ
तरदक्षिण चरदलहीनयुता नाडिकारवेरुदयात् प्राक्पश्चात्तरदेशांतरयोजनखाष्टांशकेनापीत्या दि अन्यैश्च सौम्ये गोले सवितुरुदयादित्यादि अत उ
क्तमनेन तद्गोलवासनाविरुद्धं सप्तर्षिप्रमुखवचनैर्विरुद्धं अथ वक्तव्यमस्य पाठांतरमस्तीति चेत्तन्न यतः सर्वत्राप्ययमेव पाठः अथ च वक्तव्यमस्यार्थांतरमस्ती
ति चेत्तदपि न उत्तानार्थत्वे सत्यर्थांतरासंभवात् अर्थांतरं भविष्यति चेद्विचार्यं तु नास्त्येवार्थांतरं अथ वक्तव्यमसौ मध्यरेखायाः पश्चिमदेशनिवासी भविष्यति

योगे पुरारव्युदयाद्वियोगे पश्चात्प्रवृत्तिर्दिनवारकर्तुः १० द्विघ्नेष्टनाडीशरलब्धतुल्यावारप्रदेशादपि कालहोराः

अतस्तेन स्वदेशाभिप्रायेणेदमुक्तमिति तदपि न उत्तरगोले देशांतरपलेभ्यो हीने चरे सति व्यभिचारात् तथा हि तद्द्वावयोः संस्कारे क्रियमाणे पश्चिमदेशांतर
स्यावशेषत्वात्तत्तुल्यैः पलैः पूर्वमेव वारप्रवृत्तिर्भाव्या असौ तु वदति वियोगे पश्चादिति अतः कुत्राप्यनालंबने सतीदं वक्तव्यं अनेन पश्चिमदेशनिवासित्वा
त्स्वदेशाभिप्रायेणेदमुक्तं यत्तूत्तरगोले अल्पचरे सति व्यभिचर्यते तत्कदाचित्कत्वात्तेनोपेक्षितमिति मंतव्यं १० अथ होरानयनं इंद्रवज्रा वारप्रवेशाद्वारप्रवे
शमारभ्य हि द्विघ्नाश्च ता इष्टनाड्यश्च ताभ्यः शरैः पंचभिः यल्लब्धं तेन तुल्याः कालहोराः कालहोरेशाः स्युः अपि मतांतरद्योतने प्रागुक्तहोराः स्युरेता अपि भवं
तीत्यर्थः तासु होरासु संख्यागणना ———— उक्तवत्स्यात् भास्वच्छुक्रज्ञेत्यादिना अनयोर्मतयोः फलितमाह यदीति यद्युभाभ्यां प्रकाराभ्यां क्रूरा होरा भवेत्तत्क्रू

दयो वारमारभ्य संख्यायेरन्गणयेरन् कर्मणि लिङ् भास्वान्सूर्यः शुक्रः प्रसिद्धः ज्ञो बुधः इंदुश्चंद्रः सौरः शनिः आर्यो गुरुः भौमः प्रसिद्धः ८ अथ पापहोराभंग
माह सौम्यग्रहहोराः शुभाः पापहोराः अशुभा इति स्पष्टमर्थसिद्धं च सौम्यवर्गैः अधिके तस्मिन् सौम्यवर्गाधिके लग्ने सति क्रूराः पापहोरा मोघा निःफलाः स्युः ग्रहाणां त्वड्
गान्त्वस्य पतित तत्र चतुराधिकाः सौम्या वर्गाश्चेत्तस्तदा सौम्यवर्गाधिक्यमिति स्पष्टं किंच वारे रात्र्यां च क्रूरा होरा मोघाः स्युः सौम्यवारे सदा रात्रौ क्रूरवारे सत्यपीत्यर्थः
तथा च गर्गः क्रूरवारे क्रूरहोरा न शस्ता इह मंगले नातिदुष्टा शुभवारे रात्रौ स्वल्पफला मतेति वैद्यनाथः न लग्नं सच्चतुर्वर्गे दुष्यते कालहोरयेति एतत्प्रसंगेन
अन्यस्य पापजनितस्याशुभफलस्य भंगमाह पापारिष्टमिति पापारिष्टं पापग्रहजनितमरिष्टं अशुभं निःफलं स्यात् कस्मिन्सति शक्तिभाजां बलिनां सद्ग्रहाणां सौ

तत्कालार्कन्यूनलग्नांशपिंडो भक्तः पंचघ्नोऽणिभिर्भुक्तहोराः । भास्वच्छुक्रज्ञेंदुसौरार्यभौमाः संख्यायेरन्वारतस्ते तदीयाः ॥८॥
होराः क्रूराः सौम्यवर्गाधिके स्युर्लग्ने मोघाः सौम्यवारे च रात्र्यां । पापारिष्टं निःफलं शक्तिभाजां स्यात्षड्वर्गे लग्नगे सद्ग्रहाणां ॥९॥
चरार्धदेशांतरयुग्वियोगौ क्रमेण याम्योत्तरगोलगेऽर्के

म्यग्रहाणां षड्वर्गे लग्नगे सति ९ एवं कालहोराणां मतांतरमुक्त्वा सर्वसंमतं वक्ष्यमाणत
दृष्टं तावद्वारप्रवृत्तिमाह उपजातिका चरार्धदेशांतरं च ग्रहगणिते प्रसिद्धं तत्र चरार्धमेव चरखंडमुच्यते देशांतरयोजनानि स्वचतुर्थांशोनितानि तत्पलानि स्युः
तेषां चरार्धपलानां देशांतरपलानां च क्रमेण युग्वियोगौ कार्यौ कस्मिन्सति याम्योत्तरगोलगे अर्के सति याम्यगोले योगः उत्तरगोलगे वियोग इत्यर्थः तत्र यो
गे सति तैः पलैर्दिनवारकर्तुः प्रवृत्तिरस्तुदयात्पुरा पूर्वं स्यात् वियोगे सति पश्चाद्भवेत् अतो दक्षिणगोले सदा पूर्वं वारप्रवृत्तिरुत्तरगोले पश्चादिति दिनस्य
दिवसस्य वारस्य कर्ता वार एवेति यावत् इयमुक्ता वारप्रवृत्तिरस्मगणनावासना बाह्यत्वात् सप्तर्षिवराहादिवचनविरोधाच्च तथाहि लंकायां सूर्योदयात्सर्वदेशेकि

र्यः तत्रकेचिन्मृत्युयोगं सर्वदेशेत्यजंति तद्दाक्यंच सर्वदासर्वदेशेषु मृत्युयोगं विवर्जयेदिति १२ अथलग्नेषड्वर्गशुद्धिमाह शार्दूलविक्रीडितं राशेः अं
शाःराश्यंशाःराशिभुक्तांशाःराशीन्संत्यज्य अंशाग्राह्याइत्यर्थः तेचतुर्षुस्थानेषु क्रमेणराशिभूगुणेक्षणहताः१।९।३।२ ईक्षणेद्वौ शेषाःस्पष्टाः तिथ्यभ्रभू
दिक्शरैर्भक्ताः१५।१०।१०।५ अभ्रशुद्धोदशशेषाःप्रसिद्धाः लब्धानिभार्धदयोवर्गाःस्युः भार्धहोरादृक्काणोदृष्काणः नंददिनरुद्रागोनवांशद्वादशांशौ एवं
चत्वारोवर्गाःयस्यग्रहस्ययद्गृहंतत्तस्यैव अयमेकोग्रहाख्यः अथत्रिंशांशाःसमराशौसितादीनांपंचादयस्त्रिंशांशाःत्रिंशतःपूरणास्त्रिंशाःशद्दंतविंशते
श्चेतिउप्रत्ययःत्रिंशाख्ने अंशाश्चत्रिंशांशाः तद्यथा समराशावाद्याः पंचभागाःशुक्रस्यततः सप्तबुधस्य ततोष्टौगुरोः ततः पंचशनेः ततः पंचभौमस्ये



राश्यंशाःशशिभूगुणेक्षणहतास्तिथ्यभ्रभूदिक्शरैर्भक्ताभार्धदृक्काणनंददिनरुद्रागाग्रहं यस्ययत् त्रिंशांशाःसितसौ
म्यजीवरविजक्ष्माजन्मनांव्युत्क्रमादोजक्षेषुशराश्वसप्तमरुतः पंचेतिषाड्वर्गिका १३ कुजकवींदुजचंद्ररवींदुजाः सित
कुजेज्ययमार्कजसूरयः॥

तिओजर्क्षेषुविषमराशिषुव्युत्क्रमात्भागानामधिपतीनांच तद्यथा आद्याःपंचभौमस्येति ओजर्क्षेषुविषमरा
शिषुव्युत्क्रमात् भागानामधिपतीनांच तद्यथा आद्याःपंचभौमस्य ततः पंचशनेः ततोष्टौगुरोः ततः सप्तबुधस्य ततः पंचशुक्रस्येति अत्रसितादीना
मेवोक्रमइतिनव्याख्येयं गर्गादिवचनविरोधात् इतीयंषड्वर्गिकास्यात् षण्णांवर्गाणांसमाहारःषड्वर्गीसैवषड्वर्गिका १३ अथसौम्यपापवर्गज्ञानाय
राश्यधिपानाह द्रुतविलंबितं कुजादयोभवनपाराश्यधिपाःस्युःमेषादीनांद्वादशराशीनां कुजादयोद्वादशयोर्द्वादशक्रमेणाधिपाःस्युरित्यर्थः एवंग्रहाधी
शाःअथनवांशस्यएतेलवपानवांशपतयश्चस्युःनवांशाराशेरप्यधिपाःस्युरित्यर्थः तमेवनवांशराशिमाह तदादयइति तस्यनवांशस्योदयःप्रथमाःअ

वर्गः पापवर्गाधिकं च तदाति दोषो महादोषो भवेत् दात लग्नं सर्वथा त्याज्यमेवेत्यर्थः ११ अथैतत्प्रसंगेनान्यांश्च महादोषानाह शार्दूलविक्रीडितं गंडांतानित्रि विधानि शूलवैधृतवरीयसामित्यादिना वक्ष्यमाणानि वैधृतः सप्तविंशो योगः संक्रांतेः सकाशाद्यामद्वये उभयतः संक्रांतिकालात्प्राक्पश्चाच्च षोडश घटिका इत्यर्थः यामार्धे अर्धयामः स तु शास्त्रांतरोक्तः मनीषिणो र्धप्रहरा द्वितीयादित्यादिना व्यतिपातः सप्तदशो योगः विष्टिर्भद्रा सप्तमं करणं कुलिको नंतरमेवोक्तः एतैर्गंडांतादि दोषैर्भग्नं विलग्नं जगुर्मुनयः एष्वन्यतमे दोषे सति लग्नभंगः स्यादित्यर्थः अत्र कुलिकमाह द्विघ्ना इति द्वाभ्यां द्वाभ्यां ऊना द्विघ्ना मनवश्चतुर्दश अर्कतः सूर्यवा रस्य कुलिकनो मुहूर्ता भवंति कुलिकोस्त्येषां ते कुलकिनः रवौ चतुर्दशो मुहूर्तः कुलिकश्चंद्रे द्वादशो भौमे दशमे इत्यादि निशि तु व्येकाः रवौ त्रयोदशश्चंद्रे एकादशो

संख्योक्तवृत्तास्ययम्दुभाभ्यांक्रूराकुवर्गश्च तदातिदोषः ११ गंडांते व्यपि वैधृतावुभयतः संक्रांति यामद्वये यामार्धे व्यतिपा तविष्टिकुलिकैर्भग्नं विलग्नं जगुः द्विघ्नानामनवोर्कतः कुलकिनो व्येका मुहूर्ता निशि त्याज्यास्तिथ्युडुवारजाश्च न परे दो षाः खशाद्यान्विना १२

इत्यादि दिनस्य रात्रेर्वा पंचदशांशो मुहूर्तः प्रसिद्धः अथैतत्प्रसंगेन अन्येषां वारादिदोषाणां विषयमाह त्याज्या इति ये मया त्र उक्ता दोषाः तेभ्यः परे अन्ये तिथ्युडुवारजा दोषाः खशाद्यान्विना न त्याज्याः आदिशब्देन हूणवंगानां ग्रहणं तिथिश्च उडुश्च वारश्च तेभ्यो जातास्तेन या तत्र तिथिजा दग्धातिथ्यादयः नक्षत्रजा उपग्रहादयः वारजाः कंटककालवेलादयः ते खशादिषु वर्जनीया नान्यत्रेत्यतो त्र नोक्ता इति ये त्वत्रोक्तास्ते सर्वदेशे त्याज्या इत्यर्थः उक्तं च तिथ्युडुदिनपतिजाता योगा ग्राह्यास्तु हूणखशवंगइत्यादि यद्वा तिथिश्च उडु च तिथ्युडू तिथ्युडू च वारश्च तिथ्युडुवाराः तेभ्यो जातास्ते तथा ति थिवारजा नक्षत्रवारजाश्चेत्यर्थः उक्तं च श्रीपतिना विरुद्धयोगास्तिथिवारजाता इत्यादि तिथिवारजाः संवर्तकादयः उडुवारजाः मृत्युयोगकालदंडा

रं भुक्तिश्चंद्रस्यैव योगश्चंद्रार्कभुक्तियोगः तद्यथात्र पत्रिंशतं षष्ठ्या संगुण्य त्रिधा संस्थाप्य क्रमेण चंद्रार्कभुक्त्यंतरेण चंद्रभुक्त्या चंद्रार्कभुक्तियोगेन
च विभज्य तिथिनक्षत्रयोगानां संधिनाड्यः स्युरित्यर्थः तिथिशब्दस्य स्त्रीलिंगेपि सत्वात् कृदिकारात् ङीषि कृते तिथी इति सिद्धं उक्तं च सिद्धांते शशितनुवि
कलाभ्य इति एतास्त्र मध्यगस्ता आनीय वक्ष्यति नक्षत्रयोगे त्यादिना चंद्रार्कयोः संक्रमणकालमाह इंदोरिति इमा अनेनैव प्रकारेण साधिता अंतरना
ड्यः इंदोः पुण्या रवेस्तु पुण्यतमाः स्युः एतदुक्तं भवति रवेश्चंद्रस्यापि बिंबं त्रयस्त्रिंशत्कलाः अतोत्र पूर्वरीत्यात्र पत्रिंशतं षष्ठ्या संगुण्य स्वस्वगत्या वि
भज्य अंतरकालः स्यात् स चंद्रस्य पुण्यः रवेस्त्वतिशयितपुण्यः अयं कालो नक्षत्रयो राश्योर्वा अंतराले भवेत् संक्रमणकालस्यार्धः १६ अथ भौ



तिथीभयोगांतरनाड्य इंदोः पुण्या रवेः पुण्यतमास्त्विनास्युः १६ कुजादिकानामपि बिंबलिप्ताः खषड्गुणाः स्वस्व
जवेन भाज्याः नाड्यादिकः संक्रमणांतरालकालः स्फुटस्तत्स्फुटभुक्तिबिंबे १७ रवेर्भवेदेकगृहाधिकस्य यद्दृग्
हृदं खलु सायनस्य ॥

मादीनामपि संक्रमणकालमाह उपजातिका कुजादिकानां भौमादीनामपि प्रागुक्ता बिंबलिप्ताः खषड्गुणाः स्वस्वज
वेन स्वस्वगत्या भाज्याः संक्रमणांतरालकालो नाड्यादिको भवेत् अत्र बिंबानि मध्यानेवोक्तानि तेभ्यः कृतोपसंक्रमणकालः सोपि मध्यो भवेत तत्स्फु
टभुक्तिबिंबैः स्फुटः स्यात् तेषां भौमादीनां ग्रहगणितोक्त्या स्फुटभुक्तिभिः स्फुटबिंबैश्च स्फुटकालः स्यात् एषां संधिकालादीनामर्धं तदंतादुभयत्रेत्य
र्थः सिद्धं १७ अथ कृत्वादिसंधीन्विवक्षुः कृत्वानयनं तावदाह उपजातिका एकगृहाधिकस्य एकराशियुक्तस्य सायनांशस्य अयनांशसहितस्य रवेर्यद्दृ
ग्हृदं भागसमूहो भवेत् तद्राशिद्वयभागैः षष्टिभिस्तष्टं भक्तं यल्लब्धं ते वसंताद्यृतवः संतमारभ्य कृतवो भवंति मृगादिराशिद्वयभोगादित्युक्त्या मीनादौ

जमृगाननतौलिकुलीरकाः स्युः मेषराशौ प्रथमनवांशो मेष एव वृषे मकरः मिथुने तौलीकर्के कर्कट एव एवं पुनः सिंहे मेषः कन्यायां मकर इत्यादि एवं प्रथमनवांशं ज्ञात्वा तमारभ्य प्रागानीतभुक्तनवांशान् गणयित्वा वर्तमानो नवांशराशिः स्यात् तदधिपो नवांशाधिपतिरिति १४ अथ होरादीनाह वसंततिलका समे सम राशौ अब्जखगयोर्होरे स्तः अब्जश्चंद्रः खगः सूर्यः खगः पूषा गभस्तिमानित्यभिधानात् विषमे राशौ क्रमेण होरे स्तः प्रागानीतलब्धवशात्समे राशौ प्रथमा होरा चंद्रस्य द्वितीया सूर्यस्य विषमे प्रथमा सूर्यस्य द्वितीये होरेत्यर्थः अथ द्रेष्काणाधीशाः द्रेष्काणका इति स्वगृहात्प्रथमपंचनवेश्वराणां द्रेष्काणाः स्युः तद्यथा य राशेर्यल्लब्धं तदा प्रथमो वर्तमानः यदा एकं तदा द्वितीय इत्यादि अनेन विधिना प्रथमो द्रेष्काणो राश्यधिपस्यैव द्वितीयस्तस्माद्राशेः पंचमाधिपस्य तृतीयो

मवनपालवृषाश्च तदादयस्तु जमृगाननतौलिकुलीरकाः १४ होरे समेब्जखगयोर्विषमे रवींद्वोर्द्रेष्काणकाः प्रथमपंच नवेश्वराणां स्युर्द्वादशांशपतयः स्वगृहात्कुभानि भानि ग्रहाश्च निजमित्रशुभांशभाजः १५ भजेत भुक्त्यंतरभुक्तियोगैः पृथक्पृथक् षष्टिगुणान् गुणाग्नीन् ॥

नवमराश्यधिपस्येति अथ द्वादशांशः स्वगृहात द्वादशांशपतयः स्युः सौयलब्धवशात् द्रेष्काणवत् त्रिंशांशानां स्वामिन एवोक्ताः एवं षड्वर्गाधीशा उक्ताः अथैषां शुभत्वमाह शुभानीति शुभानां सौम्यग्रहाणां भानि राशयः शुभानि स्युः षड्वर्गस्य राशेरधिपः शुभः सर्वगशुभः स्यादित्यर्थः न केवलं राशि किंतु ग्रहाश्च निजमित्रशुभांशभाजः शुभाः निजश्च मित्रं च शुभश्च तेषामंशो नवांशः तं भजंतीति ते तथा स्वसुहृत्कुभानां नवांशस्थिता इत्यर्थः वर्गराशेरप्यधिपः एवंविधस्तदैव वर्गः शुभ इति भावः १५ अथ तिथ्यादीनां संधिकालमाह उपजातिका षष्टिगुणा न्गुणाग्नीन् पृथक्पृथक् भुक्त्यंतरभुक्तियोगैः भजेत् क्रमेण तिथीभयोगांतरनाड्यः स्युः भुक्त्यंतरं च भुक्तिश्च भुक्तियोगश्च ते तथा चंद्रार्कयोर्भुक्त्यंत

रयोद्धतं शूलश्च वैधृतश्च वरीयांश्च एषां योगानां पस्त्रागागतं अवांतरं यच्च पंचमेषु तिथिषु पंचमी दशमी —— पंचदशीषु पश्चरेवतीं इ फणिभोडूवंरेव
तीज्येष्ठाश्लेषोडूवंतरपि आगतारेवांतरा द्विगुणं सुधीः उत्सजेत्सजेत् एतेषां मतादेतत्तुल्यं पूर्वेप श्चाच्चेत्यर्थः एतद्द्वंडांतसंज्ञं २१ अथ तिथ्यादीनां संधि
व्यवहारार्थमध्यमत्यानीय पठति वसंततिलका नक्षत्रयोगतिथीनां संधिषु एकानाडिकाक्रमेण तिथ्यष्टविंशतिपलैः सहिता उभयत्र पूर्वेपश्चाच्चत्याज्या
एकानाडिका पंचदशपलैः सहिता उभयत्र पूर्वेपश्चाच्चत्याज्या एकानाडिका पंचदशपलैः सहिता नक्षत्रसंधिः अष्टपलैः सहिता योगसंधिः विंशतिपलैः सहि
ताति तिथिसंधिरित्यर्थः लग्नसंधिमाह कर्कालीति कर्कालिमीनतनूनां कर्कवृश्चिकमीनलग्नानां संधिषु दिक्पलानि दशपलानि उभयत्र त्याज्यानि एषां अंता

शूलवैधृतवरीयसां चयत्संचमेषु च तिथिषु वांतरे रेवतींद्र फणिभोद्भवंतु दष्यागता द्विगुणमुत्सृजेत्सुधीः २१ नक्षत्र
योगतिथिसंधिषु नाडिकैकातिथ्यष्टविंशतिपलैः सहितोभयत्र कर्कालिमीनतनुसंधिषु दिक्पलानि त्याज्यानि शेषवि
वरेष्वपि पंचपंच २२ अमातिथिः पार्श्वतिथिद्वयेन समं न मांगल्यमुपादधाति॥

त्पूर्वेपश्चाच्चेति शेषाणां वृषादिलग्नानां विवरेषु संधि
षु पंचपंचपलानि उभयत्र त्याज्यानि एष संधिरंशानामपि ज्ञेयः लग्नोपलक्षणात् २२ अथ मासस्संधिमाह उपजातिका अमा अमावास्या तिथिः पार्श्वयोस्ति
थिद्वयेन समं सह साकं सार्कं समं सहेत्यमरः चतुर्दशी प्रतिपत्सहितेत्यर्थः मांगल्यं न उपादधाति न धारयति अत्र हेतुमाह लोकमिति यस्मात्कारणात्तत्र त
स्मिन् तिथित्रये लोकं कृष्णश्चंद्रमाः लोकं पाति असौ लोकं पः पालनपूरणयोः कर्तरिशः शितात् नालोकस्पृष्टेणेइतिसुम् तिथेः प्रणेता प्रवर्तकः पीयू
षवपुरमृतशरीरः वपुष्मान्प्रशस्तं वपुर्यस्यासौ वपुष्मान्नास्ति चतुर्दश्यादिषु कृष्णपक्षे यवं विधश्चंद्रमा अस्तंगतत्वादित्यर्थः चंद्रो ह्यमृतकिरणो लो

वसंतारंभः अत उक्तं एकग्रहाधिकस्येति यावद्विरंशैरयनच्युतिः स्यादित्युक्तत्वात्सायनस्येत्युक्तं एवं केचिद्दलयनादीनि सायनार्कादिकं इति तदभिप्रायेणो
क्तमुक्तं केचित्तु केवलादेव उभयादपि केचित्कालनिर्णयकाराद्यः १८ अथ ऋतुलासीनां संधिकालमाह तेषां ऋतूणां संधयः अंगांगघटीसमाः षट्षष्टिघटि
कातुल्याः स्युः तदंतास्त्रयस्त्रिंशद्घटिकाः पूर्वपश्चाच्चेत्यर्थः चेद्विषुवायनीयास्तर्हि द्विसंगुणाः द्वात्रिंशदधिकशतघटिकाः इत्यर्थः विषुवंच अयनंच विषुवायने तयो
रिमा विषुवायनीयाः विषुवं मेषतुलासंक्रमौ अयनं कर्कटमकरसंक्रमौ तत्पूर्वपश्चाच्च षट्षष्टिघटिका इत्यर्थः यत्र काले शेषशून्यं भवेत् राशिद्वयभागतष्टमिति क्रि
यमाणे यदा शून्यं शेषं भवेत् एकस्यांतोन्यस्यादिरित्यर्थः स संधिसंधिर्भवेत् संधेरपि संधिः संधिसंधिः एष कालविशेषपुण्यः अतिशयितपुण्यः अत्र संधि

यदत्र राशिद्वयभागतष्टलब्धं वसंतादृतवो भवंति १८ तत्संधयोंगांगघटीसमाः स्युर्द्विसंगुणाश्चेद्विषुवायनीयाः स सं
धिसंधिः खलु यत्र शेषः शून्यं भवेदेष विशेषपुण्यः १९ संधौ पुरंध्रीशुचमेति वंध्यासूतप्रजा वा यदि संधिसंधिः वदंति वात्स्या
ऋतुना विमूढां निशीथमध्यंदिनसंधिमूढां २०

संधौ पुण्ये विशेषग्रहणात्संधिकाले साधारणपुण्यमस्तीति सूचितं १९ अथैषां संधी
नां फलमाह उपजातिका संधौ इति यदि नक्षत्रादिसंधिकाले पुरंध्री स्त्री शोकं सतिप्राप्नोति यदि संधिसंधिस्तदा पुरंध्री वंध्या मृतप्रजा वा भवेत् अथैत
त्प्रसंगेन मध्यंदिनमध्यरात्रसंधिकालयोः फलमाह वदंतीति निशीथमध्यंदिनसंधिषु उढां विवाहितां ऋतुना मूढां आर्तवरहितां वात्स्या मुनयो
वदंति वत्सस्यापत्यानि वात्स्याः निशीथोर्द्धरात्रः मध्यंदिनस्येति मध्यंदिनं तेषां संधयः तत्परिमाणमुक्तं ग्रंथांतरे मूर्त्तः कालो निवसति महानिशायां
चदिनदले यस्मात् दशपूर्वं दश परतस्तस्माद्वर्ज्यानि च पलानीति २० अथ शूलादियोगसंधीनां विशेषमाह ॥ ॥ ॥ ॥

हौदिनक्षयेवेतिज्येष्ठमासस्यविशेषमाह यज्ज्येष्ठेतियज्ज्येष्ठगर्भजमपत्यंपुत्रःकन्यावातज्ज्येष्ठमासेमहोत्सवंचौलोपनयनविवाहादिकंउपेतंप्राप्तं
तदवश्यंवृद्धिनइयात्नप्राप्नुयात्ज्येष्ठापत्यज्येष्ठमासेमंगलंशुभमित्यर्थः२५ अथेषांगुणदोषाणांविवेककर्तुःप्रसंसामाह रथोद्धतं इतियदुक्तंगुणा
गुणमयंगुणाश्च अगुणाश्चगुणागुणाःतैःप्रचुरंगुणागुणमयं अतींद्रियदृशोदिव्यदृष्टारोमुनीश्वराःनिरूचिरेनिजगदुःविदितजन्मतन्मतःलग्नलग्न
धीःदैवविक्कीर्तिभाग्भवति तच्चतन्मतं अस्यतच्छब्दस्यपूर्वेणयच्छब्देनान्वयःजन्मचतन्मतंचजन्मतन्मतेजन्मतेयेनासीत्तथाएवंविधगुणदोषविचा
रचतुरोलग्ननिहितैकबुद्धिःकीर्तिमान्भवतीत्यर्थः२६ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायांविवाहवृंदावन

इत्यतींद्रियदृशोनिरूचिरेयद्गुणागुणमयंमुनीश्वराः दैवविद्विदितजन्मतन्मतःकीर्तिभाग्भवतिलग्नलग्नधीः २६
इतिविवाहवृंदावनेलग्नषड्वर्गाध्यायोऽष्टमः ८ अथगोधूलिकाध्यायः प्राचींकुंकुमचर्चितामिवदिशंमुक्ताफलस्र
ग्विणींकौसुंभांशुकभासिनीमिवदिशंप्राचेतसींदर्शयन्

टीकायांविवाहदिपिकायांलग्नषड्वर्गादिशुद्ध्यधिकारोष्टमोऽध्यायः ८ एवंसर्व
लग्नानांशुद्धिमभिधायेदानींगोधूलिकलग्नविशेषशुद्धिरारभ्यते तत्रतावत्तस्यकालंदर्शयन्स्वकविताकौशलंदर्शयतिशार्दूलविक्रीडितं तावत्सर्येत
मंगलंनसुरभीरेणोःकुमार्याःकरंपाणिंगृह्णतःसौकर्तुःपुरुषस्यमंगलंभवतिसुरभीणांधेनूनांरेणुःधूलिःसुरभीरेणुःअंगेषुलग्नाःसंसक्ताःसुरभीरेण
वोयस्याःसातथा धेनुधूलिधुसरायाइत्यर्थः तावत्कथंयावद्रविःसूर्यःसंध्याकुरंगीदृशासहकरग्रहंयातिकुरंग्याहृगिवदृग्यस्यासातथामृगलोचना
संध्येवकुरंगीदृक्संध्याकुरंगीदृक्तया अत्रसंध्यासायंसंध्यैवतत्रसुरभीरेणूनांसंभवात्किंकुर्वन्नकुंकुमचर्चितामिवप्राचींदिशंप्रतिआत्मानंद

काप्याय कस्तिथि प्रवर्तक इति अन्ये त्वयं द्बाल्य त्वाद्द्वितीया निषिद्धा तन्मतं निषेधयन् किंचिद्विशेषमाह २३ उपजातिका अयं चंद्रमाः प्रतिपत्समाप्तौ प्र
तिपदंते उदेति च सामीप्ये सप्तमी प्रतिपदं ते तत्समीपे वेत्यर्थः इ हकर्मादिसंस्कारवशात् स उदितश्चंद्रः कृशोपि वर्धिष्णुतया हेतुना प्रशस्तः वर्धनशीलो व
र्धिष्णुः तस्य भावस्तथा यथा शिशुर्वर्धमानतया प्रशस्यते तद्वच्चंद्रोपीत्यर्थः अतोस्य बालत्वदोषो नास्तीति सूचितं तस्यापि विशेषमाह द्वीपेति द्विर्गता आ
पो यस्मिन् तद्द्वीपं तस्मादन्यद्द्वीपं द्वीपांतरं तत्र तिष्ठतीति द्वीपांतरस्थः देशांतरस्थ इत्यर्थः देशांतरस्थश्चंद्रस्तावद्विफलः तावत्कथं यावत्स्वध्वीनयनाध्व
नीनो नास्ति दृष्वी शब्देन तत्र स्याजनालक्ष्यं तेतेषां नयनानि दृष्वी नयजानि तेषाम ध्वा मार्गस्तस्मिन्नलंगच्छतीति दृष्वीनयनाध्वनीनः अध्वनीयत्वा

लोकं पृणंस्तत्र तिथेः प्रणेता यस्मान्न पीयूषवपुर्वपुष्मान् २३ उदेति चाप्यं प्रतिपत्समाप्तौ कृशोपि वर्धिष्णुतया प्र
शस्तः द्वीपांतरस्थो विफलोपि तावद्यावन्न दृष्वीनयनाध्वनीनः २४ नो जन्ममासतिथिभेषु न चाधिकोने मासे तिथौ च दृढमंगलमामनंति यज्ज्येष्ठगर्भजमपत्यमुपेतमेतज्ज्येष्ठे महोत्सवमवश्यमियान्न वृद्धिम् ॥ २५ ॥

वित्यलंगाम्यर्थे ख़ः आत्माध्वानो खे इति अतः प्रकृतित्वं यद्वा दृष्वीनयनाध्वनिर्ईनासमर्थः दृष्वीनयनमार्गेक्षम इति एतदुक्तं भवति शास्त्रेण दृष्टश्चंद्रो दे
शांतरदृष्टः इह लंकापुरे र्कस्य यदोदयः स्यात्तदादिनार्धयमकोटिपुर्यामित्यादि गोलवासनया प्रसिद्धं अतः स्वदेशभूमिस्थितैर्जनैर्यावन्न दृष्टस्तावद्विफल
इत्यर्थः अभ्रादिना तु अदर्शनेन न दोष इति प्रसिद्धमेव २४ अथ जन्ममासादीनां निषेधमाह वसंततिलका जन्मनि मासतिथिभानि तेषु जन्ममासि जन्मतिथौ
जन्मनक्षत्रे वेति दृढमंगलं चौलोपनयनविवाहादिकं नो आमनंति न कथयंति न च अधिकोने मासे अधिमासे क्षयमासे चेति अधिकोने तिथौ च दिनवृ

ग्ने एवंविधं पेनवो भवंतीतिभावः अस्य प्राशस्त्यमाह दोषैरितिकथंभूतं लग्नं अन्यैर्महद्भिर्दोषैः मनूनसहितमपि अयंभावः गोधूलिकलग्ने सदा सप्तमः
सूर्यो स्यैव अयंमहादोषः मदनमूर्तिशपङ्ग इत्युक्तत्वात् गतद्वन्ये मेहादोषैरष्टमभौमादिभिः सहितमपि लग्नं शुभंभवेदिति यद्येवं तर्हि केचित्सष्ठाष्टमचंद्रे स
ति लग्नस्य भंगमाहुस्तन्निरस्यति २ गोधूलिकेपि अष्टमषष्ठमूर्तिं विधुंयत्केचिन्मोचयंतित्याजयंति तत्तस्मात्कारणाद्यं पंस्वरूचिप्रपंचः अष्टमं च षष्ठं च अष्टमषष्ठे त
यो मूर्तिर्देहो यस्य सोतथा अष्टमषष्ठस्थितइत्यर्थः तद्वाक्यं च जामित्रं न विचिंतयेद्धहयुतमित्यादि हित्वा चंद्रमसं षड्ष्टमगतं गोधूलिकं शास्यते इति अयं
स्वरूचेः स्वस्यामिरुचेः प्रपंचो विस्तारः यद्वा स्वरूच्या कृत्वा प्रपंचो व्यामोहनं जनानां तस्मात्कुतः यस्मादिदं गोधूलिकं विवाहधिष्ण्यैः सह पंचांगशुद्धिमयं

गोधूलिकेपि विधुमष्टमषष्ठमूर्तिं यन्मोचयंतितत इयंस्वरुचिप्रपंचः पंचांगशुद्धिमयमेव विवाहधिष्ण्यैर्यस्मादिदंसततम
स्तगते पतंगः ३ नांशोन लग्नमिह दृष्टयुतंस्वभर्त्रा नार्कारसौरतमसामपि संगभंगः किं चंद्रचारभयमेकमिहास्तु किंचिन्ना
त्रप्रमाणवचनं किमपि श्रुतन्नः ४ ॥

मेवपंचांगशुद्ध्या प्रधानं पंचांगशुद्धिमयं गोधूलिके विवाहनक्षत्रेषु सत्सु पंचांगशुद्धिरेव मुख्या न लग्न
त लग्नशुद्ध्यादिकमिति पंचांगादीनि तिथ्यादीनि प्रसिद्धानि तेषां शुद्धिः स्वाभाविकदोषविरहः यथा रोहिण्यादिषु विवाहे हितत्वात् तर्हि विवाहधिष्ण्यैरि
तिपौनरुक्त्यं तन्न नक्षत्रस्य प्राधान्यात् उक्तधिष्ण्यमधिकृत्य पंचांगशुद्धिर्विलोक्येत्यर्थः एतदग्रे प्रपंचयिष्यामः एतत्कथं यस्मात्कारणादिदं गोधूलिकं सत
तं नित्यं अस्तंगते सप्तमगते पतंगे सूर्ये सति भवेत् एतादृशे महादोषे गृहीते सति किंत्वन्ये षष्ठाष्टमचंद्रादय इतिभावः अनेनैव अष्टमभौमादयोपि निराकृताः एमः
किंच ३ इहास्मिन् गोधूलिके अंशो नवांशः स्वभर्त्रा स्वस्वामिना दृष्टयुतो नास्तु लग्नं च स्वभर्त्रा दृष्टयुतं नास्तु अर्कारसौरतमसां सूर्यभौमशनिराहूणां





43

र्शयन् इवोत्प्रेक्षायां कुंकुमेन चर्चितां मंडितां तां दृशेर्णिजंतत्वाद्विकर्मकत्वं सायंकाले प्राच्यां कुंकुमसदृशः स्वाभाविकः संध्यारागः स कुंकुममिवेत्यु
त्प्रेक्षा कथंभूतां प्राचीं मुक्ताफलस्रग्विणीं मुक्ताफलानां स्रक् मुक्ताफलहारः सोऽस्ति यस्याः सा मुक्ताफलस्रग्विणी तां मत्वर्थीयो विनिः अर्थान्नक्षत्रमालेव
मुक्ताफलस्रक् तामिव दर्शयन् प्राचेतसीं दिशमिव प्रचेतसो वरुणस्येयं प्राचेतसी तां प्रतीचीं इव यथार्थं यथा प्राचीं तथा प्राचेतसीमिति तेन प्राचीदि
शं प्राचेतसीं च दिशं दर्शयन्निति भावः कथंभूतां प्राचेतसीं कौसुंभांशुकभासिनीं कुसुंभ्याः पुष्पाणि कुसुंभानि तैः रक्तं कौसुंभं तच्च तदंशुकं च तेन भा
सते सा तथा अर्थात्संध्यारागएव कौसुंभांशुकमिति यद्वा कौसुंभांशुकमिव भासते सा तथा यावत्सायंसंध्याकाले एतादृशः संध्यारागः सुरभीरेणवश्चदृ

यावद्याति करग्रहं सह रविः संध्याकुरंगीदृशा तावन्मंगलमंगलग्नसुरभीरेणोः करं गृह्णतः १ उत्कर्णतर्णकविलो
कनवल्गुवल्गत्पीनस्तनोद्धृषितदुर्धरधेनुधूलिः गोधूलिकं स्रज तिगोपपृथग्जनानां दोषैर्महद्भिरपि लग्नमनू
नमन्ये ॥ २ ॥

श्यते तावत्काले करग्रहकर्तुमंगलं स्यादिति तात्पर्यार्थः १ अथ गोधूलिकप्रशंसां तदधिकारेणाह वसंततिलकापं
चश्लोकाः उर्ध्वौ कर्णौ येषां ते उत्कर्णाः ते च ते तर्णकाश्च तर्णका वत्साः तेषां विलोकनं तेन वल्गवः शोभमानाः वल्गंतीति वल्गंतः वल्गनं गतिविशेषः
पीनामांसलास्तना यासां ताः पीनस्तनाः उदुत्कर्षेण हृषिताः संतुष्टा उद्धृषिताः हर्षनिष्ठा यां वेद्भुत्वं दुःखेन धर्तुं शक्यंते ताः दुर्धराः उत्कर्णतर्णकविलोक
नेन वल्गवश्च ता वल्गंत्यः पीनस्तना उद्धृषिता दुर्धराश्च ता धेनवश्च तासां धूलयस्तास्तथा ताः कर्मी गोधूलिकं लग्नं कर्तृ गोपपृथग्जनानां स्रजत्युत्पा
दयतीति दृष्टांतोऽस्यार्थः गवां धूलयस्तत्र भवं तदुपलक्षितकाले जातं लग्नं तद्गोधूलिकं गोपाः पशुपालकाः पृथग्जना हीनवर्णाः गोपादीनां गोधूलिल

लार्गलार्गलानियतये मुनिभिः रचयांबभूवे अरचि णिजंताद्रचतेः कर्मणि लिटि अवोनुप्रयोगः तपनस्य अर्धबिंबं तस्य वेलाकालः तस्य व्यवस्थितिरव
स्थानं कालस्य अर्गलातस्यानियतिर्नियमः इयमर्धबिंबात्मिका वेलाव्यवस्थितिः कालमध्यनियमायरचिता किंतु तत्पूर्वं तत्पश्चाच्च कालांतरमस्ति अ
र्धघटिकात्मकवाक्यांतरदर्शनादितिभावः तथाचाहुः दिनांते सूर्यबिंबार्धपूर्वं पश्चाद्घटी दलं कालार्गलेव वेलायां धात्रोद्वाहाय निर्मितेति अत्र गोधूलिके
पि विधुमष्टमषष्ठेत्यादि यदुक्तं ग्रंथकृता तत्सम्यग्विचारपदवींनाधिरोहति तथाहि यदुक्तोत्र हेतुः पंचांगशुद्धिमयमेव विवाहधिष्ण्यैरित्यादिना तत्र
दृष्ट्वा तेकेयं पंचांगशुद्धिरिति पंचांगानि तिथ्यादीनि प्रसिद्धानि नारदवसिष्ठादिभिः पंचांगशुद्धिविरहदोषस्त्वाद्यः इत्यादिना महादोषप्रकरणेभिहितानि
तेषां शुद्धिर्दोषविरहः दोषोहि द्वेधैव प्राकृतिक आगंतुकश्चेति यस्मिन्कर्मणि यदभिहितं न तिथ्यादिकं तस्मिन्प्राकृतिको दोषः यथा विवाहे दर्शव्यतिपातभर

कालार्गलानियतये तपनार्धबिंबवेलाव्यवस्थितिरियं रचयांबभूव ६ इति विवाहवृं
दावने गोधूलिकाध्यायो नवमः ९॥

ण्यादौ आगंतुको ग्रहादिजनितः यथा तिथौ दग्धत्वं नक्षत्रे पापवेधादिकमिति अतः
पंचांगानां प्रकृतिकदोष एवात्र शुद्धिः न त्वागंतुकदोषविरहः तस्य योगकरणयोरनभिधानात् अपि च शुद्धिशब्देन आगंतुकदोषविरहे उच्यमाने वारदोषः
स्वार्जूरिकसमांघ्रिभमित्यादिनारदादि पठितेषु दोषेषु पौनरुक्त्यापत्तिः एकविंशतिपरिगणनाया असंभवश्च तस्मात्पंचांगानां प्राकृतिकदोषविरह एव शु
द्धिरिति स्थितं अत एवंविधाया पंचांगशुद्धेस्तन्मयमेव गोधूलिकं इत्युक्तं भवति अथ यदीह शंब्रूषे पंचांगशुद्धिमयमेव विवाहधिष्ण्यैरिति वदतो यमाशयः
विवाहविहितनक्षत्रे सति पंचांगानां ग्रहादिजनितदोषाभावलक्षणा शुद्धिर्विवक्षिता तदपि न योगकरणयोस्तस्यासंभवात् यथासंभवमिति चेत्तदपि न पं

गोयोगस्तेन भंगो लग्नभंगः सोपि नास्तु एवं सत्येकं चंद्रचारभयं किमस्तु चंद्रस्य चारस्तस्माद्रूपं हित्वा चंद्रमसं षष्ठाष्टमगतमिति एतदेकं कथमस्त्विति अ
पितु तदपि नास्तु नन्वानागम एव प्रमाणमिति चेत्तत्राह किं चेति किं च अन्यच्च अत्रास्मिन् चंद्रचारविषये वा युष्माकं प्रमाणवचनं किमपि न श्रुतं अस्मि
न्विषये यद्वाक्यं प्रमाणीकर्तव्यं तादृशं महर्षिसंमतवाक्यं नास्तीति भावः तदर्थं त्वं किं विलोक्यमिति आह ४ तद्वा धूलिकं शनौ शनिवारे सार्के कार्ये दृश्ये रवौ स
तीति चित्रशिखंडिनः सूनौ गुरुवारे विकार्ये विगतो रविर्यस्मिन् तद्विरवि अस्तंगते र्के सतीति कस्मात् कुलिकयामदलोपलंभात् कुलिकस्य यामदलं च तयोः
रुपलंभप्राप्तिः शनौ हि रात्रौ प्रथममुहूर्ते कुलिकः अतः सार्के गुरौ तु अष्टमयामार्धे अतो विरवीति केवलमिदमेव पंचांगमध्ये वारदोषसद्भावात् न त्वन्यदि

रवि

सार्के शनौ विरवि चित्रशिखंडिसूनौ तल्केवलं कुलिकयामदलोपलंभात् प्रायेण संकरभवामशुभर्क्षपक्षक्रूरक्षणेषु
शुभकृत्करपीडनं स्यात् ५ अत्रोभयत्र घटिकादलमिष्टमाहुर्ग्राह्यस्तदंबरमणेरपि नार्धबिंबः॥

ति एतत् किं तत्राह प्रायेणेति संक
रेण जातिसंकरेण भवंति ते संकरभवः तेषां हीनवर्णानां करपीडनं प्रायेण बाहुल्येन अशुभर्क्षपक्षक्रूरक्षणेषु शुभकृत्स्यात् ऋक्षं च पक्षश्च ऋक्षपक्षौ
अशुभौ च तौ ऋक्षपक्षौ च तौ तथा क्रूरश्चासौ क्षणश्च स तथा अशुभर्क्षपक्षौ च क्रूरक्षणश्च ते तथा एतदुपलक्षणाद्दुष्टवारयोगादिष्वपि एष्वपि हीनव
र्णानां पाणिपीडनं शुभं किं पुनः पंचांगशुद्धाविति भावः तथा च शौनकः अंत्यानामशुभर्क्षे इत्यादि यदुक्तं सार्कमित्यादि तत्परिमाणमाह ५ अत्रास्मिन् गो
धूलिके यस्मात्कारणादुभयत्र अधोस्तमयात्प्रागपश्चाच्च घटिकादलमिष्टमाहुः तत्तस्मात्कारणादंबरमणेः सूर्यस्य अर्धबिंबोपि कालो न ग्राह्यः अर्धबिंबका
ले यस्मिन्स्तथा नहि तद्वाचकवाक्यानां अधोदितेर्धास्तमिते सूर्यबिंबे दृशगत इत्यादीनां गतिमाह कालार्गलेति इयंतपनार्धबिंबवेलाव्यवस्थितिः का

योः किल लोकत्रयस्य युगपत्प्रवृत्तिः तत्र चंद्रार्कयोः समकलत्वाच्चांद्रमसादिः स एव मेषगतार्कत्वात्सौर एव चैत्रमासः तदानीमादित्यस्यैव होरा अतोर्कवारः इत्यादि सर्वं पौषे मकरादिस्थिते र्के न घटते यतः सौरवर्षमासादेः प्रवृत्तिः संहिताकारैर्मकरादेरेव स्वीकृता उक्तं च मृगादिराशिद्वयभानुभोगादिति अतश्चांद्रस्य मुख्य इति ग्रंथकारोक्तिः नैतच्चतुरस्रं प्रवृत्तिकाले मेषादिगतार्कत्वात्सौरमासस्यापि प्रवृत्तेः साफल्यकीर्तनायैव वास्तवं तु मेषादेरेव ग्रहगणिते प्रसिद्धा तथा चोक्तं दिनं सुराणामयनं यदुत्तरमित्यादि किंच प्रवृत्तिकाले चांद्रदिनं वर्षादेरपि प्रवृत्तेस्तस्यादिमुख्यत्वं कथमन्यवक्तव्यं तस्मादनया युक्त्या चांद्रमासस्य श्रेष्ठत्वं वक्तुमनुचितं किंतु युक्त्यंतरसंहितागमबलात् तदुच्यते नक्षत्रेण युक्तः कालः सास्मिन्पौर्णमासीति संज्ञायामिति च पाणिनेरनुशासनात्पौषीत्यादिसंज्ञा

एवं पौषे मृगमुखगते भास्वति स्यान्न चासावुक्तः श्रेयान्परिणयविधाविंदुमासोस्ति तस्मात् १ नेष्टः पौषो मृगयुजि रवावाह तश्चैत्रवीणेश्वारुश्चैत्रोप्यजसह चरे भास्करे सुंदरीणां॥

सौरादौ नोपपद्यते तस्माच्चांद्रमास एव मुख्यः इति अत एवाहनारदोपि यस्मिन्मासे पौर्णमासी येन धिष्ण्येन संयुता तन्नक्षत्राह्वयो मासः पौर्णमासी तदाह्वया तत्पक्षौ शुक्लकृष्णाख्यौ देवपित्र्यौ च तावुभाविति अभिधानं च पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभाविति अत एव सिद्धांते प्युक्तं मासास्तथा च तिथयस्तुहिनांशमानादिति अतः सौरादौ मासप्रयोगो गौणवृत्त्या योजनीय इत्यस्मात्सिद्धांतः तर्हि रवेर्वैशाखं उत्तरायणमिति विवाहे सौरमासाः कथमुक्ताः नाषाढप्रभृतिचतुष्टये विवाह इत्यनेन चांद्रमासा ग्रंथांतरे उक्ताः अनयोर्विरोधे सति सयुक्तिकं निर्णयं वक्तुं पूर्वपक्षमाह मंदाक्रांता सुंदरीणामुपयामे विवाहे मृगयुजि मकरगते रवौ पौषो नेष्टः मकरगतार्कस्य शुभत्वेपि अशुभपौषयोगात्स नेष्ट इति भावः ननु विपरीतं कुतो न स्यादित्यत्राह आह तदिति प्रवीणैः पंडितप्रवरैः मृगयुजि रवौ पौषश्चेदाहृतः स्वीकृतः मकरार्कस्य शुभता

चपदस्यवैयर्थ्यात् अतः शुद्धिशब्देनप्राकृतिकदोषाभावः सोकर्तव्यस्तर्हि पंचांगशुद्धिग्राह्यैः सार्कैशनाविस्यादिनाकुलिकार्धयामोकर्घंटस्त्यज्यते वारदो
षादिति चेत्तत्रनारदवसिष्ठादिभिः पंचांगशुद्धिविरहइत्यादिपठितदोषेषुवारदोषस्यपृथग्ग्रहणात् तर्हिकुलिकंक्रांतिसाम्यं चेत्यागमबलान्कुलिका
र्धयामौत्यज्येते यद्येवं षष्ठाष्टमचंद्रेणाकिमपराद्धं सोप्यागमबलात्त्यज्यते नात्रप्रमाणवचनंकिमपिश्रुतमपि चेत्तदपिनयत आगमप्रमाणंवाक्यानि
संत्येव षष्ठेष्टमेमूर्तिगते च चंद्रे गोधूलिकेमृत्युमुपैतिकन्याकुजेष्टमेमूर्तिगतेथवास्तेवरस्यनाशंप्रवदंतिगर्गाः धिष्ण्यंक्रूरयुतंत्याज्यंमूर्तौषष्ठाष्टमेचंद्रं
कुजेरंध्रास्तलग्नगं विनारंध्रंशुभैर्युक्तं गोधूलं शुभदंभवेदित्यादीनि एतान्यबहुसंमतानीति चेत्तदपिनयस्यास्त्यपःपासिकोपीहदोषइत्युक्तत्वात् किमु
तबहूक्तेः अतःषष्ठाष्टमचंद्रादयोगोधूलिकेउक्तदोषास्तेपित्याज्याइतिसिद्धं ६ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञवि

## अथमासगोचरविचाराध्यायः चैत्रेमासिप्रतिपदितिथौवासरेर्कस्यसर्वैर्मेषादिस्थैर्गगनगतिभिर्भूर्भुवःस्वःप्रवृत्तिः

रचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांगोधूलिकाध्यायोनवमः ९ अथविवाहमास गोचरविचाराध्यायोव्याख्यायते तत्रादौसौरचांद्रमास
योर्विचारमाह मंदाक्रांता यस्मात्कारणाच्चैत्रेमासिशुक्लप्रतिपदितिथौरवेर्वासरेसर्वैर्गगनगतिभिः रव्यादिग्रहैःमेषादौस्थितैर्भूर्भुवःस्वःप्रवृत्तिः आसीत्
भूर्भुवःस्वरित्यव्ययानिक्रमेणलोकत्रयवाचकानि तथाचोक्तं भूर्लोकाख्योदक्षिणेव्यक्षदेशात्तस्मात्सौम्योयंभुवःस्वश्चमेरुः इति अतःपृथिव्यादितल्लोकत्र
याधिष्ठितानामेषांलोकानांप्रवृत्तिःप्रथमनिर्माणं सूक्ष्माभचक्रंकमलोद्भवेनेति लंकानगर्यामुदयाच्चभानोरितिचपदुक्तंतस्मादेषमासेमृगमुखगतेमकरा
दिस्थितेभास्वतिभास्करेनासीत् तस्मात्कारणात्परिणयविधौइंदुमासश्चांद्रमासःश्रेयानश्रेष्ठउक्तः अयंभावः लंकायांक्षितिजगतयोर्मेषादिस्थितिवंद्रार्कौ

त्रि·टी·
४६

गोचराष्टकवर्गयोर्बलाबलमाह रथोद्धतानि ३ योषितांस्त्रीणांगुरुपतंगयोः गुरुसूर्ययोगोचरेशोभनेसतिगोचरविधिनागुरुबलेरविबलेचसतीत्यर्थः
क्रूरग्रहःशुभकरःस्यात् तदत्यये तस्यगोचरबलस्यात्यये अलाभेसति अष्टवर्गविधिनागुरुपतंगबलेसति मतांतरमाह सूर्यशुद्धिमिति अपरेनृणां
पुरुषाणांसूर्यशुद्धिंजगुःनतुगुरुशुद्धिंगोचरविधिनातदलाभे अष्टवर्गविधिनेतिउक्तंचप्राक् भानुरप्युपचयेतिपुरुषाणांगुरुशुद्धिस्तुव्रतबंधएवअ
तानविवाहेशूद्रादीनांतुव्रतबंधाभावाद्विवाहएवगुरुशुद्धिःसूर्यशुद्धिश्चेति ५ ननुचात्रगोचरस्यकथंमुख्यत्वंतत्राहजातके अष्टकवर्गफलमेवास्तितु
त्रपचंद्रराशिफलंतदेवगोचरफलंसंहितासुपठितं अतोस्यअष्टवर्गफलस्यपरिणयेतिमुख्यताकिंनस्यात् गोचरफलंह्येकस्माच्चंद्रराशेरेव अष्टवर्ग

46

योषितांगुरुपतंगगोचरेशोभनेशुभकरःक्रूरग्रहः अष्टवर्गविधिनातदत्ययेसूर्यशुद्धिमपरेनृणांजगुः ५ अष्टवर्गफ
लमेवजातकेनास्यकिंपरिणयेपिमुख्यता सत्यमुद्वहनजन्मशास्त्रयोरन्यता मुनिभिरेवसस्मरे ६ क्रूरमष्टमम
रिष्टमिष्टदंसप्तमंशुभमुशंतिजन्मनि॥

फलंत्वष्टराशिभ्यः अतोस्याधिक्यात् परिणयेपितत्प्राधान्यंकथंनस्यादितिभावः एतदर्धांगीका
रेणपरिहरति सत्यमितिजातके अष्टवर्गफलंमुख्यमितिमन्यामहेपरिणयेपिमुख्यतेतिनसहामहइतिकथंउद्वहनजन्मशास्त्रयोःविवाहशास्त्रज
न्मशास्त्रयोरन्यता अन्यत्वंमुनिभिरेवसंस्मरेस्मृता विवाहशास्त्रस्यजन्मशास्त्रस्यचभेदोमुनिभिरेवस्मृतइति ६ अत्रोदाहरणमाह जन्मनिजन्मकाले
अष्टमंक्रूरमरिष्टमशुभमुशंति सप्तमंशुभग्रहंइष्टदंशुभप्रदमुशंतिकांक्षंतिमुनयःद्वयमुद्वहनरीतिर्विवाहमार्गेनभवतितथाहिजन्मकालेष्टमःक्रूर
ग्रहोशुभःविवाहेतुशुभःजन्मकालेसप्तमःशुभग्रहःशुभःविवाहेत्वशुभः अतोनयोः —— शास्त्रयोरन्यथात्वंइतिहेतोरत्रविवाहेसोगोचरपथोगोचर

रामः
४६

तन्नदा चैत्रोपि अजसहचरे मेषगते भास्करे सति चारुः शुभः स्यात् नचैवमस्ति किंच अस्य प्रसिद्धस्य फाल्गुनस्य माहव्याधैः स्मृतत्शुभफलस्य प्रसंगाद्यो
गात् मीनो मीनमतार्कोपि अविकृतफलः किं न स्यात् अपितु अविकृतफल एव नविकृतं फलं यस्य सः तथा यथा स्वफल एवेत्यर्थः शुभस्यापि फाल्गुनस्य यो
गात् दुष्टोपि मीनो दुष्टफल एवेति भावः नचाप्येवमस्ति एवं सौर प्राधान्यं स्वीकर्तुरनिष्टद्वयं २ एवं सति सिद्धांतमाह उपजातिका यदि फाल्गुने झषो मीनग
तार्कस्तदा न निंद्यः चांद्रस्य मुख्यत्वात् एतत्प्रसंगेन व्रतबंधेपि निर्णयमाह मेष इति मेषो मेषगतार्कस्तु यदि वैशाखगतस्तदा न निंद्यः मेषेर्के चैत्रत्वं न हीत्सु
तरे शुभस्यापि मेषस्य शुभवैशाखयोगाच्छुभत्वमिति भावः प्रकृतमाह मध्याश्रितेति मध्याश्रितौ चैत्रमासगतौ द्वौ मीनमेषगतार्कौ वपि वर्जनीयौ चैत्रस्य

मांद्व्याद्यैः स्मृतत्शुभफलस्यास्य किं नो पपामे मीनोपि स्याद्विकृतः फलः फाल्गुनस्य प्रसंगात् २ झषो न निंद्यो यदि फा
ल्गुने स्यादजस्तु वैशाखगतो न निंद्यः मध्याश्रितौ द्वावपि वर्जनीयावित्यादि वाचा मियमेव मुक्तिः ३ प्रायः सौरमानमिष्टं
विवाहे तत्किं चांद्रमासमाहुः फलेन यस्मात्सम्यक्तत्फलाप्तिस्तदैक्ये सौरो मासः केवलः किंचिदूनः ४॥

दुष्टत्वात् मीनस्तु स्वरूप
त एवाशुभः मेषस्तु चैत्रयोगादिति चांद्रस्य मुख्यत्वादिति सर्वत्र हेतुः इत्यादि वाचां इत्यादि वस्मिणां युक्तिरियमेव इत्यादिकमुक्तवतां युक्तिरियमुक्तेवे
त्यर्थः यदि हि चांद्रमुख्यत्वं तदा पृथक् सौरमानं कथमुक्तमित्याशंक्याह ३ शालिनी यदि प्रायो बाहुल्येन सौरमानं विवाहे स्वीकृतं तत्तदा फलेन चांद्रमासं
किमाहुः शौनकादयः धनमानपरिभ्रष्टा चैत्रे चात्रसमैशुनात्वसतीत्यादिना यस्मादेतौ सौर चांद्रमासौ विवाहे उक्तौ तस्मात्तदैक्ये तयोः सौरचांद्रमास
योरेकत्वे सति फलाप्तिः सम्यक् परिपूर्णा स्यात् केवलः सौरमासः चांद्रापेक्षया किंचिदूनः चांद्रस्य मुख्यत्वादित्यर्थः ४ एवं सौरचांद्रयोर्बलाबलमुक्त्वा

तस्य यमनमाकर्षणं तत्रोत्सुकः विभ्रमो विलासो यस्याः सा तथा विभ्रमो भ्रांतिहावयोरिति विश्वः अखिलानि च तानि केंद्राणि च तेषां समवायस्ते तथा २ चतुष्वपि केंद्रेषु गतैः खलखेचरैः पापग्रहैः वापिर्नाम योगो भवति इहास्मिन् योगे अर्पितपुरस्कारा अर्पितो दत्तः पुंसे वरायकरो यया सा परिणीतेत्यर्थः युवतिः स्त्री उज्झितकांतगृहा सती उज्झितं त्यक्तं कांतगृहं भर्तृगृहं यया सा तथा जनयितुः पितुर्गृहे कुरुतोत्सवान्कुरुते कुत्सितानि रुतानि कुरुतानि कुशब्दाः तेषामुत्सवा आनंदाः ३ गगने दशमं तोयं चतुर्थं तपो नवमं तेषु यथा तथा स्थितैः शुभग्रहैः शंखसंज्ञं योगं भृगुमुनिर्गदति असौ योगः अशमसुखं सबलयति प्र

सगुणलाभवतीभवतींगितैः प्रियमनोयमनोत्सुकविभ्रमा २ अखिलकेंद्रसखैः खलखेचरैर्भवति वापिरिहार्पित पुंस्करा युवतिरुज्झितकांतगृहा गृहे जनयितुः कुरुते कुरुतोत्सवान् ३ गगनतोयतपस्सु शुभैर्भृगुर्गदति शंखमशसबलयत्यसौ धनयशोनयशोभितनुश्रियां परिणयेन पयोरुहचक्षुषां ४ एकादशे कुजरवी रविजः सपत्ने वित्ते विधुस्तपसि शेषनभश्चराश्चेत् श्रीवत्स एष सुखयत्यपि रूपरिक्तां सौभाग्यभोगभरभंगितरंगितांगीं ॥ ५ ॥ ॥

तिबध्नाति निराकरोतीत्यर्थः केन परिणयेन कासां पयोरुहचक्षुषां पयोरुहं कमलं तद्वच्चक्षुर्यासां तास्तथा तासां स्त्रीणां कथंभूतानां धनयशोनयशोभितनुश्रियां धनं च यशश्च नयश्च तैः शोभते सा धनयशोनयशोभिनी तनोर्वपुषः श्रीः कांतिः तनुश्री धनादिशोभिनी तनुश्रीर्यासां तास्तथा ४ वसंततिलका एकादशे कुजरवी सपत्ने शत्रौ षष्ठे रविजः शनिः वित्ते धने विधुः तपसि नवमे शेषनभश्चराः कुजरविशनिचंद्रव्यतिरिक्ताश्चेत्स्युः तदा श्रीवत्सो नाम योगः एष योगः रूपेण रिक्ता रूपरिक्ता सौंदर्यहीना तामपि स्त्रियं सुखयति कथंभूता सौभाग्यति सौभाग्यस्य भोगः तस्य भरो भारः तस्य भंगिरच

मार्गः रथोद्धतः रथैरुद्धतः अतिधृष्टः अस्य मार्गे श्लेषः गोचरमार्गः पारं पर्यागतः स्फुरद्वृत्त्यर्थः रथोद्धत इति छन्दसोपि नाम सूचितं ७ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृन्दावनटीकायां विवाहदीपिकायां मासगोचरविचाराध्यायो दशमः १० अथ प्रातिस्विकभावफलमुक्त्वा योगजमाह शालिनी चक्रस्य प्राचि अर्द्धे पश्चार्द्धे क्रमेण क्रूराक्रूरैः कृतावृत्तं चक्रमिति योगमाम्नन्ति मुनयः एतदुक्तं भवति दशमभावभागानारभ्य चतुर्थभावभागपर्यंतं चक्रस्य पूर्वार्द्धं चतुर्थभावभागानारभ्य दशमभावभागपर्यंतं पश्चिमार्द्धं तत्र चक्रस्य पूर्वार्धे यदा क्रूराग्रहाः पश्चिमार्धे सौम्यास्तदा चक्रं नाम योगः स्यादिति अस्य फलमाह अत्रेति अत्र योगे ऊढायाः परिणीतायाः सुभ्रुवः सुष्ठु भ्रुवौ यस्याः सा सुभ्रूः तस्या योषितश्चित्तवृत्तिः

नेयमुद्वहनरीतिनित्यसावत्रगोचरपथो रथोद्धतः ७ इतिविवाहवृंदावने मासगोचरविचाराध्यायो दशमः १०
अथ ग्रहयोगाध्यायः चक्रस्यार्धे प्राचि पश्चाक्रमेण क्रूराक्रूरैश्चक्रमित्यामनंति अत्रोढायाः सुभ्रुवः स्वैरिणीत्वे भ्राम्यत्युच्चैश्चक्रवच्चित्तवृत्तिः १ तनुनिमीलनगैश्च शुभाशुभैर्ध्वज इतीह कृतोद्वहना वधूः ॥ ॥ ॥

मनोवृत्तिः स्वैरिणीत्वे पौंश्चल्यविषये चक्रवदुच्चैर्भ्राम्यति चतुर्थे स्वैरिणी प्रोक्ता पंचमे बंधुकी स्मृतेति स्मृतिः चतुर्थे चतुर्थपुरुषोपभोगे पौंश्चल्यविषये तस्या मनोवृत्तिरितितरां चक्रवद्भ्रमतीत्यर्थः अयं सर्वग्रहकृतो योगः १ दुतविलंबितानि तनुर्लग्नं निमीलनमष्टमं तत्रगतैः क्रमेणाशुभाशुभैः लग्नस्थैः शुभैरष्टमस्थैः पापग्रहैरित्यर्थः अयं ध्वज इति योगः इहास्मिन्योगे कृतोद्वहना वधूः सगुणालाभवती भवति कृतमुद्वहनं यस्याः सा तथा गुणैः सह वर्तमानः सगुणः स चासौ लाभश्च सोस्यास्तीति सगुणलाभवती पुनः कथंभूता इंगितैः स्वचेष्टितैः हावभावादिभिः प्रियमनोपमनोऽनुरवविभ्रमा प्रियस्य भर्तुर्मनः प्रियमनः

चारिणीत्यर्थः ८ रविः सूर्यः कविः शुक्रः रविजः शनिरिंदुश्चंद्रः एभिर्ग्रहैर्व्ययो द्वादशं धनं द्वितीयं षष्ठं निधनमष्टमं एषु यथाक्रमं स्थितैः एषः कूर्मो नाम
योगः इहास्मिन्योगे विहितः कृतः करग्रहो यस्याः सा तथा परः शतानि गृहाणि भ्रमति शतेभ्यः पराणि परः शतानि पारस्करादित्वात्सुट् यद्वा परः शब्दो निपा
तइति भोजराजः शतेभ्योधिकानीत्यर्थः कयाहेतुभूतया भुजिष्यतया दासत्वेन भुजिष्यापाभावो भुजिष्यता त्वतलोर्गुणवचनस्येति पुंवद्भावः नियो
ज्यकिंकरप्रेष्यभुजिष्यपरिचारकइत्यमरः ९ भवः एकादशं परिभवः षष्ठं विक्रमस्तृतीयं एभिः स्थानैः द्युमणिः सूर्यः महीसुतो भौमः सूर्यस्यापत्यं सौरिः
शनिः तैर्यथाक्रमं सनाथैर्युक्तैः कृत्वा इदलेंदुरर्धचंद्रो नाम योगः परिणमति परिपाकं प्राप्नोति किं करिष्यन् इंदुमुख्याश्चंद्रवदनायाः स्त्रियः कुलयुग

रविकविरविजेंदुभिः क्रमेण व्यय धन षणिधनेषु कूर्म एषः इह विहितकरग्रहा गृहणीभ्रमति भुजिष्यतया परः शता
नि ९ भवपरिभव विक्रमैः क्रमेण द्युमणि महीसुत सौरिभिः सनाथैः परिणमति दलेंदुरिंदुमुख्याः कुलयुगलोद्धृतिधूर्यतां
विधास्यन् ११ व्ययनिधनतनूषु मंदचंद्रारुणकिरणैर्मुसलजगुर्मुनींद्राः इह वृष्णिकुलांतके कुमारीकुलमारी नच कापि
कार्यसिद्धिः ११

लोद्धृतिधूर्यतां विधास्यन् करिष्यन्कुलयुगलं पितृकुलं भर्तृकुलं चेति तस्योद्धृतिरुद्धरणं धुरं वहतीत्यर्थः औपक्रंदसिकं १० व्ययो
द्वादशं निधनमष्टमं तनूर्लग्नं मूर्तिस्तनूस्तनुरित्यमरः तेषु यथाक्रमं मंदः शनिः चंद्रप्रसिद्धः अरुणकिरणः सूर्यः तैः स्थितैः कृत्वा मुसलं नाम योगं मु
नींद्राजगुः इहास्मिन्वृष्णिकुलांतके योगे वृष्णयो यादवाः तेषां कुलं तस्यांतकं संहारकं मुसलमित्यर्थः क्रोडक्षिर्यादवैः शांबजठरे यद्वेष्टितं मुसलं तेन मुस
लेन यादवा विनष्टा इति भागवतादौ प्रसिद्धः अस्मिन्मुसले योगे कुमारीकुलमारी कुलनाशिनी भवति नच कापि कार्यसिद्धिर्भवति केवलकुलनाशिन्येवेत्य





48

नातथातरंगितानितरंगाः जाताः येषु तानितरंगितानि तानि अंगानि यस्याः सातथा ५ शालिनी मूर्तौ लग्ने सौम्याः स्वांत्यराश्योर्द्वितीयद्वादशयोर्य
था तथा असौम्याः पापाः कार्मुकं नाम योगं कुर्युः अस्मिन्योगे परिणीता कन्यका कांतवेषासती वेश्यारामं रमीति अतिशयेन रमत इति रमीतिप
ङोलुक् वेश्याः रमयतीति वेश्यारामः वेश्योपभोगी तमप्येषा अतिशयेन रमयतीति कया स्वरत्या निजोपभोगकौशलेन किं कृत्वा विषादैः विषश
स्त्रादि धनादिभिः कांतं भर्तारं हत्वा ६ सूनौ पंचमे शुक्रः दुश्चिक्ये तृतीये सांगिराः सगुरुः गौररश्मिश्चंद्रस्तदांगनाभ्युद्गमश्चेत्स्यात् अंगनाया अभ्यु
द्गमोभ्युदयः विवाह इति यावत् यद्वा अंगनाभ्युद्गमः कन्यालग्नं तदायं आनंदोनामयोगः तेन योगेन सुंदरी सांद्रसौख्या सांद्रं निबिडं सौख्यं यस्याः

सौम्यामूर्तौ स्वांतराश्योरसौम्याः कुर्युर्योगं कार्मुकं कन्यकास्मिन् हत्वा कांतं कांतवेषा विषाद्यैर्वेश्यारामं रमीति स्व
रत्या ६ सूनौ शुक्रः सांगिरा गौररश्मिर्दुश्चिक्ये स्यादंगनाभ्युद्गमश्चेत् आनंदोयं सुंदरी सांद्रसौख्या तेनानंदे वंशयो
र्विस्तृणाति ७ व्ययरिपुहिबुकेषु वक्रशुक्रद्युमणिसुतैः क्रमशः कुठार एषः इह विहरति संहतस्ववंशा विटपटले
परलेखिताभिसारा ८ ॥

सातथा वंशयोः पितृभर्तृवंशयोरानंदं विस्तृणाति विस्तारयति णिजंतभावः ७ पुष्पिताग्राणि ३ व्ययो द्वाद
शः रिपुः षष्ठं हिबुकं चतुर्थं एषु वक्रो भौमः शुक्रः प्रसिद्धः द्युमणिसुतः शनिः एभिः क्रमशः स्थितैः एष कुठारो नाम योगः स्यात् इहास्मिन्कुठारे योगे
परिणीता विटपले भंडसमूहे विहरति क्रीडते कथंभूता संहतोमारितः स्ववंशो यया सा तथा पटे वस्त्रांचले लेखितः अभिसारो यस्याः सातथा
असत्शयमतिसारिणीत्यर्थः नरभोगार्थिनी याति संकेतस्थानमिति अभिसारिकेति अभिधानात् यद्वा अभिचारेति पाठः अभिचारो व्यभिचारोतत्पाठे व्यभि

जीवोगुरुः इंदुजोबुधः नितांतंधनंतदस्त्यस्याः सातथा धरानंदनोभौमः कुजाद्दहनदस्युभिर्विधुरितांजनयंतिरुजोरोगःदापंचैवहलंतानामितिदापदहनो
ग्निर्दस्यवश्चौराःसर्पादयोवाविधुराविपुक्ताभर्त्रेहीनातस्याभावोविधुरतावैधव्यंपुंस्त्वपूर्ववत् अर्कात्मजःशनिःसुतेषुपुत्रेष्वपिविषयमितंपचांमलिनमूर्तिंजे
नयतिमितंपञ्चामीतिमितंपचाकृपणामितनखेचेतिरवशखिलान्तुमलिनामूर्तिर्यस्याःसातथा द्युतीनांपतिःसूर्यःसहजदुर्भगांजनयति सहजातंसहजेस्व
भाविकंतनूदुर्भगंअदैवंयस्याःसातथायद्वासहजेसोदरविषयेदुर्भगायस्याःसातथा २ अथतृतीयस्यद्रुतविलंबितंसहजेतृतीयभावेइनशनीरविशनीवधूंस

नितांतधननींधनेक्षितसितांशुजीवेंदुजा कुजाद्दहनदस्युभिर्विधुरितांधरानंदनः सुतेष्वपिमितंपचांमलिनमूर्तिमर्कात्म
जःस्त्रियंसहजदुर्भगांजनयतिद्युतीनांपतिः २ इनशनीसहजेसधनांवधूंतनुधनीसचिवःसुभगांशशीसुकृतिनींकु
रुतःकुजसोमजौनयतिदेवरिदेवरिपूपनी ३ हारिद्वारविरवनीसुतोवरांगव्याघातगुरुभृगुजेंदुजाःप्रभुत्वंबाल्येब्जः
प्रियविप्रुतिशनिस्तनाभःशून्यत्वंसृजतिसुखेसुवासिनीनां ४

धनांधनसहितांकुरुतःसचिवःशुक्रसचिवोबृहस्पतिःतनुधनांकरो
तितनुकृशंधनंयस्याःसातथाशशीचंद्रःसुभगांसुष्टुभगोभाग्यंयस्याःसातथाकुजसोमजौभौमबुधौसुकृतिनींकुरुतःसुकृतंपुण्यंतदस्त्यस्याःसा
तथा देवरिपूपतीःशुक्रःदेवरिदेवरेनयतिप्रा पयतिदेवरगामिनीत्यर्थःदेवानारिपवोदैत्याःतानुपनयतेसोदेवरिपूपनीःदैत्यगुरुःदेत्य इतिककाा
रांतःसंभोतदेत्यदेवरावित्यभिधानात् ३ अथचतुर्थस्यप्रहर्षिणीसुखेचतुर्थभावेरविःहारिद्वंसृजति अवनीसुतोभौमःवरांगव्याघातंवरांगंशि
रःतस्यव्याघातोभंगःगुरुभृगुजेंदुजाःप्रभुत्वंसृजंतिगुरुर्बृहस्पतिःभृगुजःशुक्रःइंदुजोबुधःप्रभुत्वंस्वामित्वंअब्जश्चंद्रमाःबाल्येबालत्वेप्रियवि



49

पुष्पितांग्रे तनुर्लग्नं नवनवमं भवरस कादशं तेषु गतैः यथाक्रमं बुधः प्रसिद्धः विबुधार्चितो गुरुः पंगुः शनिः एभिः कृत्वा गजो नाम योगः स्यात् इह जायां युवतिः स्त्री अहंकृताहंकारप्राप्ता सती कृतानि प्यादितानि अर्थाश्च तान्वितरति ददाति वा इत्यर्थः वा युवतिः दैवत दैवतपरा स्यात् दैवतानि च दैवे च दैवत दैवानि तेषु तत्परा दैवार्चनरता भाग्यरता चेत्यर्थः भाग्यवतीति यावत् १२ इति श्रीमत्कलागमाचार्य वर्य श्री केशवदैवज्ञसुतगणेशविरचितायां विवाहवृंदा वनटीकायां विवाहदीपिकायां ग्रहयोगाध्यायो एकादशः ११ पूर्वं मेरि पराक्रमे स्यादिना साधारण्येन ग्रहफलान्युक्तानि अधुना प्रतिस्थानं तानि सविशेषा ण्याह तत्रादौ लग्नस्य ग्रहाणां फलानि शिखरिणी मूर्तौ लग्ने स्थितो जीवः स्मरगदृशं स्त्रियं चिरंजीवां सृजति चिरंजीवतीति चिरंजीवा चिरमित्यव्ययं विभक्तिप्र

तनुनवभवगैः क्रमेण योगो बुधविबुधार्चितपंगुभिर्गजः स्यात् इह युवतिरहंकृता कृतार्थान वितरति दैवत दैवतत्परा वा १२ इति विवाहवृंदावने ग्रहयोगाध्यायो एकादशः ११ अथ ग्रहाणां भावकुंडलिकाध्यायः चिरंजीवां नु जीवः कविरविरलान गसुभगां शशांको वीं पुत्रो यम युवति पार्श्वप्रणयिनी बुधो भर्तुर्भक्तां स्मरगदृशमशीलां शनिरपि त्रयो मूर्तिमूर्तौ सृजति शि खिशस्त्रादिनिधनं १

तिरूपकं कविः शुक्रः अविरलानंगसुभगां सृजति अविरलो निविडश्चासौ अनंगश्च अनंगो मदनः तेन सुभगा सौभाग्यवती श शांकश्चंद्रः उर्वीपुत्रो भौमस्तो यमयुंति पार्श्वप्रणयिनीं सृजतः यमस्य युवतिः तस्याः पार्श्वस्तामीप्यं तत्र प्रणयः प्रीतिरस्ति अस्याः सा तथा तां यमलोकगा मिनीमित्यर्थः बुधो भर्तुर्भक्तां सृजति शनिरपि अशीलां दुष्टशीलां त्रयो मूर्तिः सूर्यः शिखि अग्निः शस्त्रं प्रसिद्धं ते आदिर्येषां तानि शिखिशस्त्रादीनि तेभ्यो निधनं यस्याः सा तथा तं १ अथ धनभावस्य दृष्टीहृत्तं धने द्विती यभावे स्थिताः सितसितांशुजीवेंदुजाः नितांतधनिनीं जनयंति सितः शुक्रः सितांशुश्चंद्रः

अस्ते सप्तमभावे स्थितो बुधः स्त्रियं वंध्यां जनयति इंदुश्चंद्रः परिवित्तं सपत्नीपरिभवां सपत्न्याः संबंधी परिभवः पराभवः सपत्नीपरिभवः परिवित्तः परिवृद्धः
सपत्नीपरिभवो यस्याः सा तथा पंगुः शनिः गलद्गर्भां गलन् तच्युतः गर्भो यस्याः सा तथा दानवगुरुः शुक्रः परनररतां परपुरुषगामिनीं अर्कः सूर्यः अवीरां
नास्ति वीरो भर्ता यस्याः सा तथा गुरुः अमरसेवाव्यसनिनीं अमरसेवायां व्यसनं विद्यते यस्याः सा तथा माहेयो भौमः अतिरजस्कां जनयति अतिशयितं रजो
यस्याः सा तथा महद्व्याधियुक्तामित्यर्थः ७ अथाष्टमे मालिनी मृत्युवेश्मनि अष्टमभावे सितसितकिरणेज्यात् द्रुहिणगृहमुखीनां स्त्रीणां मरणाय भवंति
सितशुक्रः सितकरणश्चंद्रः ईज्यो गुरुः द्रुहिणो ब्रह्मा तस्य गृहं पद्मं तद्वन्मुखं यासां तास्तथा सूर्यसौरी शनिशनी अनवरतसुखायुः संपदे भवतः सुखं च

सितसितकिरणेज्या — — मृत्युवेश्मन्यनवरतसुखायुः संपदे सूर्यसौरी भवति पतिशरीरद्रोहकृद्रौहिणेयो द्रु
हिणगृहमुखीनां यस्मणे शोणिजन्मा ८ शशिसुतगुरुशुक्राः सांद्रसौभाग्यलीलां सरलहसितकांतस्वांतकेलिं कुमारीं र
विरविसुतवक्राः कैतवाक्रांतशीलां तपसि तुहिनरश्मिः स्त्रीसवित्रीं करोति ९ ॥

आयुश्च संपच्च सुखायुः संपत् द्वंद्वैकत्वं क्लीवत्वं च
अनवरतमखंडितं च तत्सुखायुः संपत्तस्मै रोहिण्या अपत्यं रौहिणेयो बुधः पतिशरीरद्रोहकृत् तस्मात् पत्युः शरीरं तस्य द्रोहः अपघातः तं करोतीति
तथा शोणिजन्मा भौमः यस्मणे व्याधये भवेत् ८ अथ नवमे मालिनी तपसि नवमभावे शशिसुतगुरुशुक्राः कुमारीं सांद्रसौभाग्यलीलां सरलहसित
कांतस्वांतकेलिं कुर्वंति शशिसुतो बुधः गुरुशुक्रौ प्रसिद्धौ सांद्रं निविडं च तत्सौभाग्यं च तस्य लीला यस्याः सा तथा सरलं ऋजु तच्च तद्धसितं च तत्तथा
कांतस्य भर्तुः स्वांतं मनः कांतस्वांतं सरलहसितेन कांतस्वांते केलिः क्रीडा यस्याः संबंधे न सा तथा रविरविसुतवक्राः कैतवाक्रांतशीलां कुर्वंति रविः सूर्यः रवि

युतिं भर्तृवियोगं शनिः स्तनांभः शून्यत्वं स्तनयोरंभः स्तनांभः स्तन्यदुग्धं तस्य शून्यत्वं अभावे सृजति कासां सुवासिनीनां प्रौढांगनानां चिरंटीतु सुवासि
नीत्यमरः ४ अथ पंचमस्य प्रहर्षिणी असुराश्च सुराश्च असुरसुराः तेषामिज्यो शुक्रगुरू सोमपुत्रो बुध एतेषु तस्याः पंचमभावस्थिताः कुमारी सत्पुत्रां
सृजेयुः क्रूरैः रविः पुत्रारिं सृजेत् पुत्राणामरिः पुत्रघातिनी द्विजेंद्रश्चंद्रो सुतप्रजा सुतेभ्यो न्या असुता सा प्रजा यस्याः सा तथा कन्याप्रसूः अवनिसुतो भौ
मः शोकार्तां शोकेन कृतां पीडितां शनिः इनस्यापत्यं शनिः संतानसंततिविषये सतत निरांक रूरोगो यस्याः सा तथा तां सृजेत् ५ अथ षष्ठे पृथ्वीवृत्तं

सत्पुत्रामसुरसुरेज्यसोमपुत्राः पुत्रारिं रविरसुतप्रजां द्विजेंद्रः शोकार्तामवनिसुतः सुतस्य सौरिः संतानेसततरुजं सृ
जेत्कुमारी ५ विधुर्निधनमिंदुजः परभयं जयं भानुमान्कुजः कुशलमर्कभूर्विगतवैरतां वैरगः रिपुत्वमुशनास्सहस
हचरेण चारुभ्रुवां व्यनक्ति वचसां पतिः पतिमजातशत्रुश्रुतिं ६ बुधो बंध्यामिंदुः परिचितसपत्नीं परिभवांगलद्रू
भीपंगुः परनररतां दानवगुरुः अवीरामस्तेकांगुरुरमरसेवाव्यसनिनीं विवाहे माहेयः स्त्रियमतिरजस्कां जनयति ७

वैरिः षष्ठभावगः विधुः चारुभ्रुवां चारुवो भ्रुवो यासां ताः तासां स्त्रीणां निधनं व्यनक्ति प्रकटयति ददातीत्यर्थः इंदुजो बुधः परभयं शत्रुभयं भानुमा
नभानवो रस्मयः संत्यस्या सौ तथा सूर्यः जयं कुजो भौमः कुशलं क्षेमं अर्कोद्भवतीत्यर्कभूः शनिर्विगतवैरतां विगतं वैरं यस्याः सा विगतवैरा तस्या
भावो विगतवैरता प्राग्वसुस्त्वं उशना शुक्रः सहचरेण भर्त्रा समं सार्द्धं रिपुत्वं शत्रुत्वं सह चरतीति सहचराः वचसांपतिर्बृहस्पतिः भर्तारं अजातशत्रु
श्रुतिं व्यनक्ति शत्रूणां श्रुतिः श्रवणं अजाता शत्रुश्रुतिर्यस्या सौ तथा शत्रुरिति श्रवणमपि नास्तीत्यर्थः ६ अथ सप्तमे शिखरिणी विवाहे विवाहकाले

स्रा तां शनिः सुरारुचिं सुरायां रुचिर्यस्याः सा तथा विधुश्चंद्रः दुर्विधां विधानं विधातुर्विधां दुष्टकर्मा कुजो भौमः अदक्षिणावयवरुजं अदक्षिणश्चासावयवश्च
तस्य रुग्रोगो यस्याः सा तथा वामांगव्याधितां रविरतिरुचिरां अतिसुंदरामपि स्त्रियं विरूपयति विरूपां करोति रुचिरेति छंदसोपि नाम १२ अथैषां भावफलादी
नां प्राशस्त्यमाह इत्यनंतरोक्तं इदं लग्नादिभावस्थितग्रहाणां फलमशेषं समस्तमनुज्झितरेखं भवेत् न उज्झिता अनुज्झिता रेखा येन तत्तथा अत्यक्तमर्यादं यथा
तद्भवतीत्यर्थः कथंभूतं मुनिजनमतं मुनिजनानां संमतं अतनुः पृथुः वितर्को यस्य तत्तथा यद्यप्युक्तानार्थमेवं दृश्यते तथाग्रहबलादिविचारवशाद्भवि

व्यये शुभाः सद्व्ययकर्षितां शनिः सुरारुचिं रचयति दुर्विधां विधुश्च अदक्षिणावयवरुजं कुजो रविर्विरूपयत्यतिरुचिरा
मपि स्त्रियं १२ इति मुनिजनमतमतनुवितर्कं प्रतिगृहचरखचरोद्यदुदर्कं परिविगणय्य विशेषमशेषं फलमिदमशेष
मनुज्झितरेखं १३ इति विवाहवृंदावने ग्रहाणां भावकुंडलिकाध्यायो द्वादशः १२ अथ ग्रहयोगादिबलाबलाध्या
यः षट्त्र्यायेष्वशुभाः शुभा यनिधनं द्यूनांत्यवर्जं परे त्र्यायार्थेषु शशी मृतौ शनिरवी भंगाय तत्रापरे ॥ ॥ ॥ ॥

तर्कमित्यर्थः पुनः कथंभूतं प्रतिगृहेति गृहं गृहं प्रति प्रतिगृहं प्रतिगृहं चरतीति ते प्रतिग्रहचराः ते च ते खचराश्च तेभ्य उदेति उद्भवतीति प्रतिगृहचरोद्य
न् स उदर्कः उत्तरकालीनं शुभाशुभं फलं यस्मिन् तत्तथा किं कृत्वा अशेषं परिविगणय्य प्रागुक्तं समस्तं विशेषं बलाबले रूपं विचार्येत्यर्थः १३ इति श्रीस
कलागमाचार्य श्रीकेशवसांवत्सरात्मजगणेशविवाहवृंदावनटीकायां विवाहदीपिकायां ग्रहाणां भावकुंडलिकाध्यायो द्वादशः १२ अथोक्तभावफला
नां व्यवहारार्थमुपसंहारादिकं तथान्यदपि शुभाशुभयोगादिकं बलादिकं च निरूपयन् ग्रहबलाध्याय मारभ्यते तत्रादौ भावफलोपसंहारादिशार्दू

सुतः शनिः वक्रो भौमः कैतवं कपटं तेन आक्रांतं युक्तं शीलं यस्याः सा तथा तुहिनरश्मिश्चंद्रः स्त्रीं सवित्रीं करोति सूते सा सवित्री स्त्रीणां सवित्री कन्या प्रसूः
२ अथ दशमे मालिनी व्योम्नि दशमभावे शनिः कन्यकां अनियमशौचास्त्व॰यति करोति नियमेन रहितं शौचं यस्याः सा तथा शुचित्वहीनामित्यर्थः विधुश्चंद्र
अन्यकार्यैः परकर्मभिः अतिविधुरांगीं रचयति अतिशयितं विधुराणि विकलानि अंगानि यस्याः सा तथा वक्रो भौमः शाकिनी डाकिनी क्षुद्रदेवताविशेषः शाकि
नी वशाकिनी मांसभक्षिकेत्यर्थः रविः सूर्य उग्रां अशीलां कोविदो बुधः कार्मणज्ञां कार्मणं क्षुद्रकर्मविशेषः तज्जानातीति तथा आर्यः शुक्रो गुरुः शुक्रो अविकृ
तसुकृतश्रीमालिनीं रचयतः सुकृतं च श्रीश्च सुकृतश्रियौ पुण्यलक्ष्म्यौ अविकृते पूर्णे च ते सुकृतश्रियौ च ताभ्यां मालते शोभते सा तथा अत्र मालिनीति

शनिरनियमशौचां कन्यकामन्यकार्यैर्विधुरतिविधुरांगीं शाकिनीं व्योम्नि वक्रः । रचयति रविरुग्रां कोविदः कार्मणज्ञा-
मविकृतसुकृतश्रीमालिनीमार्यशुक्रौ ॥ १० ॥ एकादशे दशशतांशुमुखाः सुखानि रत्नांबरद्रविणभोगभरोन्मुखानि पाणि-
ग्रहे ददति दीर्घदृशां ग्रहेंद्राः सर्वेपि सर्वभवनेष्वबलाना किंचित् ॥ ११ ॥

छंदसोपि नाम सूचितं १० वसंततिलका दीर्घदृग्लोचनं यासां ता-
स्तासां स्त्रीणां पाणिग्रहे एकादशस्थाने दशशतांशुमुखाः दशशतानि अंशवः किरणा यस्यासौ तथा स न्मुखमादिर्येषां ते सूर्यादयो ग्रहेंद्राः रत्नांबरद्रविणभोगभरो-
न्मुखानि सुखानि ददति रत्नानि च अंबराणि च द्रविणं च तेषां भोगः तस्य भरो भारः तस्मादुन्मुखानि उदितानि अथ श्लोकावशेषे सति अत्रैव ग्रहाणां भाव फलेषु व-
लमाशास्त्यमाह सर्वेपीति सर्वेपि ग्रहा अबलाः स्थानादिबलहीनाः संतः सर्वभवनेषु लग्नादिसर्वभावेष्वपि किंचिच्छुभं नाददुः अर्थादेतत्फलमुक्तं तत्सब-
लानामेवेति ॥ अथ त्यायफविराहूनां व्ययद्वादशस्थिताः शुभाः बुधगुरुशुक्राः स्त्रियं सद्व्ययकारिणीं रचयंति कुर्वंति संख्यामौल्य यश्चतेन कर्षिता कृशत्वम

रणैर्मांसलः रश्मिभिः पुष्ट इत्यर्थः सप्तमदशमोऽपि चंद्र एवंविधः शुभः स्यादिति भावः अत्रापि अकायकोणकेंद्रेति पाठः तत्र अकायकोणकेंद्राणि चतुर्थ
सप्तमदशमनवमपंचमानि तथा च शौनकः त्रिकोणसप्तमावर्ज्ययोपगो विलग्नतः हिमद्युतिः शुभस्रगः शुभेक्षितश्च शोभन इति अव्ययस्योपि गृहीतः स तु ना
रदेन महादोषेषु पठितो अतोसौ ग्रंथकृता त्यक्तः २ अथ शुभयोगानाह मालिनी तनयात इति प्रत्येकं संबध्यते शशितनयो बुधः सितः शुक्रस्ताभ्यामनुगता
भ्यां क्रमेण नंदभद्रौ योगौ स्तः बुधेन लग्नगतेन नंदः शुक्रेण भद्र इति उभाभ्यां बुधशुक्राभ्यां लग्नगताभ्यां जय इति योगः जीवे गुरौ तनुयाते जीव इति योग
असुरसुराणां गुरू शुक्रगुरू ताभ्यां तनुयाताभ्यां स्थावर इति योगः तेज्यशुक्रे बुध गुरुशुक्रैस्तनुयातैर्विजय इति योगः तमेव योगं विशुक्रं शुक्रवर्जितं



शशितनयसिताभ्यां नंदभद्रावुभाभ्यां जय इति तनुयाते जीव इत्येष जीवे असुरसुरगुरुभ्यां स्थावरो तेज्यशुक्रे विजय
इति विशुक्रं तं च जीमूतमाहुः ३ इति शुभफलयोगाः सप्त सप्तर्षिमुख्यैर्मुनिभिरभिहितास्ते जन्मयात्रास्वपि स्युः भज
ति युवतिरिभ भूपसीमंतिनीत्वं ग्रहयुतिवलयोगाद्युत्तराधर्यमस्मिन् ४ ॥

बुधगुरुभ्यां लग्नगताभ्यामित्यर्थः जीमूतं नाम योगमाहु
र्मुनयः ३ अथैषां फलमाह मालिनी इति सप्त शुभफलयोगाः सप्तर्षिमुख्यैर्मुनींद्रैरभिहितास्ते योगाः जन्मयात्रास्वपि स्युः न केवलं विवाहे किंतु जन्मकाले या
त्राकाले च शुभफला इत्यर्थः तत्किं शुभफल इत्याह भजतीति एभिर्योगैर्युवतिः भूपसीमंतिनीत्वं भजति भूपस्य सीमंतिनी तस्या भावस्तथा नारी सीमं
तिनी वधूरित्यमरः राजपत्नी भवतीत्यर्थः अस्मिन् शुभफले ग्रहयुतिबलयोगाद्युत्तराधर्यं स्यात् ग्रहाणां युतिर्योगः तत्र बलयोगः सबलत्वं तस्मात् उ
त्तरं च अधरं च उत्तराधरे तयोर्भावः उत्तराधर्यं योगकर्तृग्रहाणां बलवशाच्छुभफलस्याधिक्यं न्यूनत्वं च कल्प्यमिति भावः ४ ॥ छ ॥ छ ॥

लविक्रीडितं षट्‌षष्ठं त्र्यस्तृतीयं आयएकादशं एषुशुभाः पापग्रहाः शुभायभवंतां शेषेष्वशुभायनिधनमष्टमंद्यूनंसप्तमं अस्तंद्वादशं एतानिवर्जे
यित्वान्येषुनवमस्थानेषु परेसौम्यग्रहाबुधगुरुशुक्राः शुभायभवंति शेषेषुनिधनद्यूनांत्येषु अशुभायशशी चंद्रः त्र्यायार्थेषुतृतीयैकादशद्वितीये
षुशुभायभवेत् शेषेष्वशुभाय तत्राष्टमेसर्वेषांविशेषमाह मृताविति मृतौअष्टमेशनिरवीशुभायभवतः नत्वशुभाय अत्ररवेरूपलक्षणाद्राहुरप्यष्टमे
शुभः तत्स्वरूपांतरंकेतुश्चराहुफलस्यरवेरितिदिक् तत्राष्टमस्थानेपरेन्येचंद्रभौमबुधगुरुशुक्राभंगायभवंति लग्नभंगकर्तारइत्यर्थः अन्यानपिल
ग्नभंगानाह क्रूरद्यूनेति शशितनूक्रूरद्यूनवृत्तान्वितेभंगायभवतः द्यूनंवृत्तमात्स्तं पयोस्ते द्यूनवृत्तेचअन्वितेच द्यूनवृत्तान्वितेक्रूरेणद्यूनवृत्तान्वितेतेतत्थाचं

क्रूरद्यूनवृत्तान्वितेशशितनूअस्तेसितज्ञौविधुर्लग्नेसौम्यसिताधिपाद्विषसितः सैंदुर्विनष्टांशपः१ अतूर्यकायकेंद्रगःसु
हृत्स्वसौम्यवर्गएकसुहृच्छुभेक्षितः शुभःशशीमूर्तमासलः२

इत्यलग्नस्यवासप्तमक्रूराक्रांतंभवेत् यद्वाचंद्रोलग्नंवाक्रूरान्वितंभवेत्त
द्वालग्नभंगःस्यादित्यर्थः अस्तेसप्तमेलग्नाच्चंद्राद्वासितज्ञौ शुक्रबुधौवासोपिभंगायलग्नेविधुश्चंद्रः भंगायद्विषिषष्ठेसोमसिताधिपाः भंगायस्युः सोम
श्चंद्रः सितःशुक्रअधिपाः स्वामिनः लग्नांशद्रेष्काणानां अत्रषष्ठंलग्नादेवनतुचंद्रात् सोमग्रहणात् सितःशुक्रः सेंदुः सचंद्रः भंगायशुक्रयुक्तचंद्रइत्यर्थः
अंशपोनवांशाधीशोविनष्टोस्तंगतोभंगायस्यात् १ अथसप्तमदशमचंद्रस्यविशेषमाह प्रमाणिकातुर्यचतुर्थकायोलग्नं ताभ्यामन्यानिअतूर्यकानितानि
चतानिकेंद्राणिच तत्रगतःसप्तमदशमगइत्यर्थः शशीशुभःस्यात् कथंभूतःसुहृत्स्वादि सुहृच्चस्वश्चसौम्यश्चतेषांवर्गः तेनयुनक्तीतितथासुहृद्वर्गगःस्व
वर्गगःसौम्यवर्गगावेत्यर्थः सुहृच्चशुभश्चताभ्यामीक्षितः सुहृद्दृष्टः शुभंदृष्टश्चेति बहुमांसमस्त्यसौमांसलः सिध्यादिभ्यश्चेतिमत्वर्थीयोलः मधूखैःकि

पिनोयदाबलिनःयोषिद्ग्रहसंदृष्टयापतिद्वयंगच्छतेनारीति अथद्वितीयंयोगमाह युग्मइंद्वाविति युग्मेसमराशौस्थितेइंद्वौचंद्रे अशुभदृशंपापदृष्टिमुपेते प्राप्तेपापग्रहदृष्टइत्यर्थः तदाकन्यका अन्यकाम्यास्यात् काम्यतेतत्काम्यं अन्यस्यकाम्यंयस्याःसातथापरपुरुषकांक्षिणीत्यर्थः तथाचशौनकः क्रूरग्रह संदृष्टेसमर्क्षगेशशिनिभजतिपतिमन्यं स्त्रीणामन्यत्रगतेसौम्यैर्दृष्टेशुभंभवतीति ६ अथग्रहविशेषेणफलविशेषफलांतराण्याह उपजातिकानरग्रहैः पुरुषग्रहैः उत्कटकांतिवीर्यैःकांतिश्चवीर्यंचउत्कटेकांतिवीर्येयेषांतैस्तथा अतिशयितप्रकाशैरतिबलैरित्यर्थः तदानीरजलोचनानांस्त्रीणांनरोभर्ताप्रियःस्यात् नारीनभोगैःस्त्रीग्रहैर्बलशालिभिःबलेनशालंतेशोभंतेतेबलशालिनःतदानारीनृणांचित्तहराप्रियास्यात् कैः स्वभोगैःनिजभोगकौशलैः



नरःप्रियोनीरजलोचनानांनरग्रहैरुत्कटकांतिवीर्यैः नारीनृणांचित्तहरास्वभोगैर्नारीनभोगैर्बलशालिभिस्तु ७ पति
रस्तपतिर्विरोचनःश्वसुरस्तत्प्रमदामदग्रहः अबलाबलिनोदिशंत्यमीसुदृशांतेष्वशुभंशुभंक्रमात् ॥ ८ ॥

पुरुषस्यनारीप्रियास्यादित्यर्थः बुधसूर्यसुतौनपुंसकाख्यौशशिशुक्रौयुवतीनराश्चशेषाइतिस्त्रीग्रहद्विकेसतिनारीनभोगैरितिबहुत्वंकथमुपप
द्यते उच्यते शौनकीयेपियोषिद्ग्रहैरितिबहुत्वमस्ति अतोस्यपूज्यार्थत्वादित्यादिगतिश्चिंत्या किंच ७ वैतालीयंसुदृग्यासांताःसुदृशःतासांस्त्रीणां पतिःअस्तपतिःसप्तमाधीशःस्यात् विरोचनःसूर्यःश्वसुरःमदग्रहःशुक्रस्तस्यश्वसुरस्यप्रमदास्त्रीश्वश्रूरित्यर्थः अमीपत्यादयःखचराःअबलानि र्बलाः बलिनःसबलाःक्रमात्सुदृशांस्त्रीणांतेषुपत्यादिष्वशुभंशुभंदिशंतिददतिकिंच ८ वैतालीयंकरग्रहेपाणिग्रहसमयेशशिसूर्यसुतावनीसु तैःचंद्रशनिभौमैःयथातथावस्थितैररिनीचास्तगैःतैःअरिःशत्रुगृहं नीचगृहं अस्तमस्तमयः तत्रगतैःअपिःसमुच्चये तन्वधिपेनापि अरिनीचास्त

अथाशुभयोगानाह मालिनी तनोर्गृहं तनुगृहं तेन युनक्तीति तनुगृहयुक् तस्मिन्लग्नगत इत्यर्थः एतत्प्रत्येकं संबध्यते दिनकररुधिराभ्यां लग्नगताभ्यां क्रमेण व्यालपातालवक्त्रौ योगौ स्तः रविणा लग्नगतेन व्यालो भौमेन पातालवक्त्र इति रविपुत्रे शनौ लग्नगते क्षय इति योगः सैंहिकेये राहौ लग्नगते तमस्कमि तियोगः केतौ लग्नगते अंतक इति योगः एवं पंच तेषु योगेषु पंकजाक्षी नारी शोकव्यसननिधनताभिः तप्यते कर्मकर्तरि रूपं निधनताभिरिति करणं यद्वा कर्मणि रूपं तदा विधनताभिरिति कर्ता एतत्प्रत्येकं फलं ५ अथान्यदुष्टयोगद्वयमाह मालिनी तनुलग्नं तुहिनमरीचिश्चंद्रः तयोर्लग्नचंद्रयोः चरगृहगतयोः चरराशिस्थितयोः आधारे सप्तमी अंगनाखेटः शुक्रः तस्य दृष्टौ सत्यां चरराशिस्थौ लग्नचंद्रौ शुक्रेण दृष्टावित्यर्थः चेद्यापिनो ग्रहा अविदिशि स्थिताः संतो बलिनः स्युः त

दिनकररुधिराभ्यां व्यालपातालवक्त्रौ क्षय इति रविपुत्रे सैंहिकेये तमस्कं तनुगृहयुजि केतावंतकस्तेषु शोकव्यसननिधनताभिस्तप्यते पंकजाक्षी ५ तनुतुहिनमरीच्योरंगनाखेटदृष्टौ चरगृहगतयोः स्यात्कांतयुग्मं क्रमाद्योः अविदिशि बलिनश्चेद्यापिनो युग्मद्वंद्वावशुभदृशमुपेते कन्यकात्वन्यकाम्या ६॥

दा कुमार्याः कांतयुग्मं भर्तृद्वयं स्यात् एतदुक्तं भवति जातके प्राच्यादिषु जीवबुधाविस्यादिना दिग्बलार्थं अन्यासे लग्नं प्राच्यां भवति चतुर्थमुदीच्यां सप्तमं प्रतीच्यां दशमं दक्षिणा इति शिष्टान्यष्टौ तन्मध्यवर्तिषु चतस्रषु विदिक्षु भवंति कोणगता दिग्विदिगित्युच्यते तस्या अन्या अविदिक् सा दिगेव प्राच्यादिका तस्यां स्थिताः यायिनो ग्रहाः लग्ने चतुर्थे सप्तमे दशमे चेत्यर्थः यातुं शीलं येषां ते यायिनः स्यात् शीलमेषां ते स्थायिनस्त एव पौराः उभयविलक्षणा आक्रंदः ते वराहेणोक्ताः रविराक्रंदो मध्ये पौराः पूर्वे परे स्थितो यायी पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रंदः केतुकुजराहुशुक्रा यायिन इति अयं योगः शौनकेन स्पष्टमुक्तः लग्नेंद्र चरराशौ केंद्रस्था या।

क्तं हरिजदिवसचंद्रात्सप्तमक्रूरदोषस्य कृत्स्नमर पूज्यः सोमपुत्रः सितो वा उदयहिबुकधर्मव्योमपुत्रालयस्थो यदि च सकलदृष्ट्या लोकयेच्छीतरश्मिमिति ११
तत्र परिपूर्णजामित्रदोषभंगत्वमाह वैतालीयं यदि हिमरश्मिनवांशकाच्चंद्रस्थितनवांशकात्त्वलखेटः शरसायकांशके पंच पंचाशत्तमे नवमांशे भवति
अयमुपसर्गडंबरः दोषाडंबरः निबिडैः परिपूर्णैरयमस्य गुणैर्न हन्यते चेज्जामित्रगोपि पापः यदि षड्गांतरे भवति तदायं दोषः केनापि गुणेन न भज्यत इत्यर्थः १२
अथैषां योगानां विचारगम्यत्वमस्तीत्याह वैतालीयं केपि केचन शरीरधारिणः संपूर्णाप्रत्यक्षदृष्टवद्दृश्यमाना योगा निःफलाः स्युः किंवत् शिखिदग्धबीजव
त् शिखिना वन्हिना दग्धं यद्बीजं तद्वत् यथा वन्हिदग्धं बीजं प्रत्यक्षसंपूर्णावयवमपि कार्यक्षमं न भवेत्तद्वत्केचिद्योगाः संपूर्णाः प्रत्यक्षं दृश्यमाना

हिमरश्मिनवांशकात्खलो यदि खेटः शरसायकांशके अयमन्यगुणैर्न हन्यते निबिडैरप्युपसर्गडंबरः १२ मोघाः शि
खिदग्धबीजवद्योगाः केपि शरीरधारिणः दृढगूढफलोदयाः परे पर्णाकीर्णहुताशराशिवत् १३ इतियः प्रतिकूलकार
कग्रहभावांशनिवेशदृष्टिभिः॥

अपि मोघाः स्युरित्यर्थः निर्बलानां ग्रहाणां संपूर्णा अपि योगाः मोघाः स्युरिति भावः परे केचन योगाः दृढगूढफ
लोदयाः संदृढगूढः आच्छन्नः फलोदयः फलप्राप्तिर्येषां ते तथा किंवत् पर्णाकीर्णहुताशराशिवत् पर्णैः आकीर्णः आच्छन्नश्चासौ हुताशराशिश्च तद्वत्
यथा पर्णाच्छन्नो वन्हिः प्रत्यक्षमदृश्यमानोपि स्वकार्यक्षमोस्त्येव तथा केचन योगा अपीत्यर्थः सबलानां ग्रहाणां अल्पयोगोपि परिपूर्णफलः स्यादि
त्यर्थः १३ एवंविधविचारवतो दैवज्ञस्य जगत्सु पूज्यत्वं स्यादित्याह वैतालीयं स दैववित् सतां विदुषां अवतंसतां प्राप्नोति अवतंसः कर्णपूरः तस्य भाव
स्तया सतामपि वद्यः किमुतान्येषामिति सकः य इत्युक्तप्रकारेण प्रतिकूलकारकग्रहभावांशनिवेशदृष्टिभिः कृत्वा तन्वादिफलेषु दत्तदृक् प्रतिकूलं दुष्टं

गतेनु एवंयोगे नितंबिनी स्त्री निरपत्या अपत्यरहिता सती नियतं निश्चितं तत्पतेः तापं प्राप्नोति अत्र सप्तमभवने निर्बले सतीति प्रसंगेप्यं तथा च शौनकः ल
ग्नपतौ रिपुभवने नीचे वा रविसुतारजनीकरैः बलरहिते वद्धूजे स्त्रीणां नभवंत्यपत्यानि अथ शास्त्रविरुद्धं किंचिल्लोकेस्ति स्तदुपहसति ९ उपजातिकावृ
त्तीयस्य कवेः शुक्रस्य रेखा शुभाय भवेत् लग्नस्य ग्रहबलावलोकनेगणनार्थं प्रतिग्रहमेकैका रेखा क्रियत इति ज्योतिर्विदां संप्रदायः तत्र तृतीयः शुक्रः शुभ
इति कृत्वा रेखा क्रियत इत्येका रीतिः नभस्योदृशमस्थो भौमः लग्नं नभनक्ति लग्नभंगकर्ता न भवेदित्यन्या रीतिः तद्वद्व्यये द्वादशे सौरिः शनिरपि लग्नं न भन
क्तीति तृतीया रीतिः इयं रीतिः पद्धतिर्जनेषु कुतस्या जागर्तितरां इयं रीतिः सर्वथा निर्मूला लोकेषु कस्माद्धेतोर्जाता अतिप्रसिद्धास्तीति अस्यानकुत्रापि मूलं दृ

शशिसूर्यसुतावनीसुतैररिनीचास्तगतैः क्रूरग्रहे अपितत्वधिपेन तत्पते निरपत्यानियतं नितंबिनी ९ कवेस्तृतीयस्य शु
भाय रेखा लग्नं नभस्थो———नभनक्ति भौमः तद्वद्व्यये सौरिरपीति रेभिर्जनेषु जागर्तितरां कुतस्त्या १० उशनागुरुरिं
दुनंदनः शशिजामित्रगपापतापहृत् नवपंचमकेंद्रमित्रभप्रणयी पुष्टदृशा विधुं स्पृशन् ११

श्यत इत्यर्थः कुतो जाता कुतस्त्या अतिश
यिता जागर्तीति जागर्तितरां आख्यातात्तरप् आम् च तदंतमव्ययं १० अथ जामित्रदोषस्य भंगमाह वैतालीयं उशना शुक्रः गुरुर्बृहस्पतिः इंदुनंदनो बु
धः अयमेकोपि शशिजामित्रगपापतापहृत्स्यात् शशिनः जामित्रं गच्छतीति तथा स चासौ पापश्च तस्य तापः अशुभं तं हरतीति तथा चंद्रात्सप्तमपापस्य दो
षहर्ता भवतीत्यर्थः कथंभूतः नवपंचमेति नवपंचानां पूरणे नवपंचमे ते च केंद्राणि च नवपंचमकेंद्रं तच्च तन्मित्रभं च तत्र प्रणयोस्यास्तीति तथा नव
पंचमकेंद्रगतः सन्मित्रगृहस्थित इत्यर्थः अपि च पुष्टदृशा विधुं स्पृशन् पूर्णदृष्ट्या चंद्रं पश्यन्नित्यर्थः अत्र केंद्र सप्तम विरहितं ज्ञेयं अशुभत्वात् तथा नो

इंद्रवज्रा एवं स्वप्नादिकः फलाद्या फलमार्गः विविधोनेकप्रकारोस्ति स्वप्नो निद्राविशेषजज्ञानं ननु स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यभिधाने निद्रा स्वप्नयोरभेदोसत्यं तथाप्यवांतरविशेषाद्भेदोस्त्येव वनगहनवत् तथाहि जाग्रतिस्वप्नसुषुप्तितुरीया इत्यवस्थाचतुष्टये योगशास्त्रे प्रसिद्धं तत्र जगतः प्रसिद्धा मनसो निरिंद्रिप्रदेशावस्थानं निद्रा सद्विधा स्वप्नः सुषुप्तिरिति यत्र दृष्टांतःकरणजं ज्ञानमस्ति सा स्वप्न इत्युच्यते यत्र तु एतन्नास्ति सा सुषुप्तिः एतत्त्रितयं सर्वजनानुभवसिद्धं तिसृभ्योपि लक्षणा सा तुरीया सा च योगिनामेव स्वप्नावस्थायां तद्गतं ज्ञानमपि स्वप्नशब्देनोपचर्यते यथा श्रीमद्भागवते स्वप्नो निद्रानुगो यथेति नैषधकाव्येपि नस्मानिशि स्वप्नगतं ददर्श तमिति अतस्तल्लक्षणमाहुर्नैय्यायिकाः योगजधर्माननुगृहीतस्य मनसो निरिंद्रियप्रदेशावस्थानं निद्रा तत्र दृष्टांतःकरणजं ज्ञानं स्वप्न इति एवमत्र स्वप्नशब्देन निद्राविशेषजं ज्ञानमुच्यते तस्मात्फलादेश अयमेको मार्गः निमित्तानि स्रुतदुर्वचनादीनि

स्वप्नो निमित्तं शकुनाः स्वकर्म शरीरमागंतुकमद्भुतानि दोषाभिचारग्रहचारकाल काम्यानि चैवं विविधः फलाध्वा ॥ २॥

शकुनाः पूर्णकुंभादयः स्वकर्म निजप्राचीनकर्मविपाकः शारीरं सामुद्रिकलक्षणादि आगंतुकं भविष्यत्कृत्यकं जातकादि अद्भुतानि उत्पाताः दिव्यभौमांतरिक्षाः दोषा वातपित्तश्लेष्मादयः स्वाभाविकाः शरीरस्थाः तेषामभिचारः प्रचारः स्वरविधानादि ग्रहचारा गोचरवक्रमार्गास्तो——दयः कालः संवत्सरमासलग्नादिः काम्यं कांक्षितं ऐहिकं पुरुषचेष्टादि तथा च शौनकः तिथिकरणर्क्षनिशाकरविलग्नपरिकल्पनामयं गर्गः पाणिग्रहणेषु फलं वदंति यवनाश्च सिद्धश्च ग्रहराशिगोचरभूवं जातकविहितं च देवलः प्राह शकुनरुतज्ञाः शकुनैर्निमित्तकुशला निमित्तैश्च कर्मसमुत्थं चान्ये कुलदेशशीलस्वभावमपरे तु इत्थं त्वन्येषु नयः कालविशेषाद्विशेषफलमिति एवं स्वप्नादिः फलमार्गो नानाविधोस्ति अतो वरवध्वोः सामुद्रिकलक्षणस्यारिष्टादिकमप्यस्माभिरप्युच्यत इति भा

55

कुर्वंतितेप्रतिकूलकारकाः तेचतेग्रहाश्चभावाश्च अंशाश्चप्रतिकूलकारकग्रहभावांशास्तेषांनिवेशःस्थानंतत्रदृश्यःताभिः तन्वादीनांफलानितेषुदत्ता
दृग्येनसत्तथा दुष्टकारकायेग्रहाभावाश्चअंशाश्चतेषांयानिस्थानानितेषुदृष्टिंदत्वातन्वादिफलेषुचदृष्टिंदत्वातद्बलाबलंविचार्ययदादिष्टंतदन्य
थानस्यादितिकलासदैवविलसतांवंद्यःस्यादित्यर्थः १४ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायांविवाहवृंदावन
टीकायांविवाहदीपिकायांग्रहयोगादिबलाबलाध्यायस्त्रयोदशः १३ अथस्त्रीपुंसयोःसामुद्रिकलक्षणपूर्वकोमिश्राध्यायआरभ्यतेतत्रादौतत्कारण
माह उपजातिकावरः कुमारींवृणुयात् कैर्निमित्तैः यल्लिंगिबालकेत्यादिनावक्ष्यमाणैः किंकृत्वासामुद्रिकलक्षणानिउल्लिख्यप्रकटीकृत्यसमुद्रे

तन्वादिफलेषुदत्तदृक्समाप्नोत्यवतंसतांसतां १४ इतिविवाहवृंदावनेग्रहयोगादिबलाबलाध्यायस्त्रयोद
शः १३ अथमिश्राध्यायः उल्लिख्यसामुद्रिकलक्षणानिवरः कुमारीं वृणुयान्निमित्तैः एवंकुमारीवरमप्युद
र्कोतर्ह्येकधारंतिरधारिधीरैः १

णप्रणीतानिलक्षणानिसामुद्रिकलक्षणानिसामुद्रिकानि स्त्रीपुंसयोः शुभाशुभलक्षणानांमुख्यप्र
वर्तकःसमुद्रएव यथाव्याकरणस्यपाणिनिः छंदसश्चपिंगलः अतस्तानिसामुद्रिकलक्षणानीत्युच्यंते कुमार्याः सामुद्रिकलक्षणैः प्रश्नकालेनिमित्ता
दिभिश्चशुभंज्ञात्वातांवरयेदित्यर्थः एवंवरमपिकुमारीवरयेत् वरस्यापिशुभंज्ञात्वातांवरंकुमारीवृणुयादित्यर्थः एवंचेत्तर्हिप्रागुक्तेनफलसंदर्भेण
किमित्याशंकायामाह उदर्कइतिहियस्मात्कारणाउदर्कः उत्तरंकालीनफलंधीरैर्गर्गादिभिरेकधाएकप्रकारं अरंनिश्चितंननिर्धारिननिर्धारितंभाविफलम
नेनैवप्रकारेणज्ञेयमितिननिश्चितइतिभावः तदेवप्रपंचमाह ॥ १ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥ ॥ २ ॥

वि॰टी॰
५६

नदृशमारोहेत्नकूपमवेशेतनबाहुभ्यांनदींतरेत्नसंशयमभ्यापद्येतेत्यादि आश्वलायनादिकल्पानांश्रीकामः पुष्टिकामोवाग्रहयज्ञंसमाचरेदित्यादियाज्ञव
ल्क्यादिस्मृतीनांचिकित्सादिशास्त्रस्यचवैयर्थ्यप्रसंगःस्यादित्यर्थः एतदपिसप्रपंचंप्रथममेवनिरूपितं अतोयदुक्तंतत्सम्यक् अथप्रकृतंतत्रतावत्
त्वस्यारिष्टान्याह श्लोकसप्तकेन ४ उपजातिका अमुं वरंनदृशोरन्निसुत्तरेणसर्वत्रसंबंधः अमुकंयः विधोः छायांकलंकंन आलोकयेन्नचध्रुवंनसप्तमां
लांनसप्तमंडलंनचमातृचक्रमालोकयेत् मातृसंज्ञाः ताराविशेषास्ताराचक्रमंडलंयस्यचकर्दमाद्दौखंडपदंभवति कर्दमधूलिप्रभृतिषुक्षिप्तपदस्यप्रतिरू
पंखंडंभवतीत्यर्थः यस्यकफः श्लेष्मा उदके च्युतः निष्ठ्यूतः सन् अंबुचुंबीमज्जति अंबुचुंबतीत्यंबुचुंबी जलमाक्रम्य बुडतीत्यर्थः ५ यस्यच उरः उरस्थलं उ

58

छायांविधोर्नध्रुवमृक्षमालामालोकयेद्योनचमातृचक्रं खंडंपदंयस्यचकर्दमादौ कफश्च्युतोमज्जतिचांबुचुंबी ५
उरः पुरः शुष्यतियस्यचार्द्रं नमांतितिस्रोंगुलयश्चवक्त्रे स्नातस्यमूर्द्धन्यपिधूमवल्ली निलीयतेरिक्तमुखः खगोवा ६
नाकीर्णकर्णः शृणुयाच्चघोषं नोवासुभुक्तोपिधृतिंनधत्ते निश्रीरकस्मात्सुतरांचसुश्रीः कृशः स्थवीयानपियोप्यकस्मात् ७

दकचंदनादिना आर्द्रंक्लिन्नंसदन्यस्याद्भुरीरस्थानात्पुरः पूर्वमेवशुष्यति शुष्कंभवतियस्यचवक्त्रेमुखेएकनिशंगुष्ठौविहायमध्यमास्तिस्रोंगुलयः परस्परकु
क्षिसंलग्नाः नमांतिनसमाविशंति अपिः वार्थेयस्ययाउदकेनस्नातस्यमूर्धनिमस्तकेधूमवल्ली धूमशिखास्यात् यस्यवामूर्धनिफलधान्यादिनारिक्तमुखः
रिक्तंचंचुः खगः पक्षीनलीयतेनिर्विशति ६ यश्चांगुल्यादिना आकीर्णकर्णः आवृतकर्णरंध्रः सन् अंतवर्तिनं स्वाभाविकंघोषंनशृणुयात् योवासुभुक्तोपि
अतिभु... तं भुक्तोपिधृतिं तृप्तिंनधत्ते अतिभुक्तः सन्नपितृप्तिंनप्राप्नोतीत्यर्थः यश्चसुश्रीरप्यकस्मात्सुतरांनिश्रीर्भवति शश्वन्निश्रीरप्यकस्मात्सुतरांसुश्रीर्भ

टी॰भ॰
५६

वृः तथा चाह॥ जातकनिमित्तशुद्धांशुभलक्षणास्थितां कुलोद्भूतां वरयेत्सुतसौख्यार्थी यवीयसीं कन्यकामिति वीयसीं न्यूनां वयसा प्रमाणतश्च एवं फलमा
गैषनेकेषु सत्सु तत्समाधानमाह उपजातिका एतत्प्रागेव व्याख्यातप्रायं पूर्वजन्मनि यदुपार्जितं सदसत्कर्म तस्मात्कर्मसु च्यते दैवरैवं परैहिकं कर्म तत्प्रयत्नः
पौरुषं चोच्यते यस्मात्कर्मतस्तु शोषाय क्षयाय पोषाय पुष्ट्यै च अधुनाविधीयमानं किं प्रमाणं कर्म भवतीत्यन्वयः किंवत् बीजं सलिलानलोर्वीसंस्कारव
त् सलिलं जलमनलोग्निः उर्वी भूमिः आसां संस्कारः तद्वत् यथा सद्बीजं सद्भिः सलिलादिसंस्कारैः संस्कृतं सदुद्देति वर्धते च अन्यथा क्षीयते। तद्वत्प्राक्कर्म ऐहिके
न सत्प्रयत्नेन वर्द्धते अन्यथा क्षीयत इति तस्मात्कारणात्सदाचारवतां श्रुतिस्मृत्यादिषु यः विहितः सदाचारस्तद्युतां पुरुषाणां सदा कदाचिदपि न हानिः

प्राक्कर्मबीजं सलिलानलोर्वीसंस्कारवत्कर्म विधीयमानं शोषाय पोषाय च तस्य तस्मात्सदा सदाचारवतां न हानिः ३॥
फलेद्यदि प्राक्तनमेव तत्किं कृष्याद्युपायेषु परः प्रयत्नः श्रुतिः स्मृतिश्चापि नृणां निषेधविध्यात्मके कर्मणि किं निषण्णा॥४॥

स्यात् अशुभमपि कर्मफलं सत्प्रयत्नेन निवार्यत इत्यादिकं प्रपंचितं प्राक्तस्मात्स्वप्ननिमित्तशकुनसामुद्रिकलक्षणादयोपि प्रयत्नलक्षणा अवश्यं विलोक
नीया इति सिद्धं एतदस्माभिः सप्रपंचं प्रथममेव निरूपितं अथ केचित्प्राक्कर्मैव फलतीति मन्यमानास्तन्मतं निरस्यति ३ विपरीताख्यानकी प्राग्भवं प्रा
क्तनं कर्म यदि प्राक्तनं कर्मैव फलेत् न तु प्रयत्नस्तदा कृषिवाणिज्यादिषूपायेषु आगमप्रकारेषु परः प्रयत्नः किं कथमेतेषु कृष्यादिषु प्रयत्नः कर्तव्यः यद
वश्यं भावितद्भवत्येवेति कृत्वा सर्वजनेन कृष्यादिषु न प्रवर्तितव्यं स च प्रवर्तते अतः प्रत्यक्षविरुद्धं तदित्यर्थः न केवलं प्रत्यक्षविरुद्धं किंच आगमविरु
द्धमपीत्याह श्रुतिरिति नृणां निषेधविध्यात्मकानि निषेधविधिरूपेषु कर्मसु श्रुतिः स्मृतिश्च किं निषण्णा कथं प्रवृत्ता आत्मानं सततं गोपायेत्यादि श्रुतिः

नयने नेत्रे श्रुतिः कर्णौ विस्रस्ताः शिथिलीभूताः नासा नयनं श्रुतयो यस्याः सौ तथा १० इंद्रवज्रा यो वा स्वप्नमध्ये स्वरारौगर्दभादौ यो नेधिकृतः आरूढो दक्षिणस्यां दिशि आक्षिप्यमाणः प्रेर्यमाणः सन् जागर्ति प्रबुध्यति अमुं वरं आर्या ज्ञातारः कुमार्याः प्रदानाय न वृणीरन् तत्र कारणमाह नेदिष्टेति नेदिष्टः अतिसमीपः दिष्टांतः प्रलयो यस्याः सौ तथा अतिशयेन अंतिकः नेदिष्टः अंतिकनारद्वयोर्नेदसाधाविति नेदादेशः दिष्टांतः प्रलयो त्ययइत्यमरः आसन्नमृत्युं सवरं न वरेयुरित्यर्थः अथा देवंविधां कुमारीं वरोपि ११ अथ छायालक्षणेनारिष्टज्ञानमाह इंद्रवज्रा निश्चलः स्थिरः नेत्रयोः पातो यस्याः सौ तथा यः निश्चलदृष्टिः सन् क्षणस्वस्य छायां निरी क्ष्याततः क्षणमंतरिक्षं पश्यन् तथा स्वकायं स्वदेहं शुभ्राभ्रसच्छायां न पश्येत् स नश्येत् नाशं प्राप्नोति शुभ्राणि यानि शुभ्रमेघाः तैः समाना छाया यस्याः सौ तथा समानस्य

आक्षिप्यमाणो दिशि दक्षिणस्यां जागर्ति यानेधिकृतः खरादौ नेदिष्टदिष्टांतममुं कुमार्यो नार्याः प्रदानाय वरं वृणीरन् ११
छायां निरीक्ष्य क्षणमंतरिक्षं पश्यन्नयो निश्चलनेत्रपातः शुभ्राभ्रसच्छायमिह स्वकायं पश्येत्स नश्येद्विकृतौ विकारः १२
प्रदक्षिणावर्तशरीररोमा हृष्यस्वनः फेनिलमूत्रपातः नात्यल्पपार्ष्णिर्मनसागभीरो धीरोन्नतारं प्रकृतिर्यशः स्वी १३॥

सादेशः इहास्मिन् स्वकाये विकृतौ दृष्टायां सत्यां विकारः स्यात् यस्यांगस्य विकारो दृष्टस्तदंगस्य तथा विकारः स्यादित्यर्थः १२ अथ श्लोकत्रयेण पुरुषलक्षणमाह उपजा तिका प्रदक्षिणं सव्यमावर्तः परिभ्रमो येषां तानि प्रदक्षिणावर्तानि तानि शरीररोमाणि यस्याः सौ तथा हृष्यस्य स्तनइव स्वनः शब्दो यस्याः सौ तथा फेनो स्ति यस्मिन् सौ फेनिलः फेनादिलच्चेति इलच् फेनिलः मूत्रस्य पातो यस्याः सौ तथा न अत्यल्पः अतिलघुः पार्ष्णिः स्याः सौ तथा नाकादित्वान्ननलोपः पार्ष्णिर्गुल्फयोरधः प्रदेशः तद्द्वयो घुटिके गुल्फौ पुमान् पार्ष्णिरधस्तयोरित्यभिधानात् मनसा गभीरो गंभीरः प्रकृत्यादिभ्यश्चेति तृतीया निम्नं गभीरं गंभीरमित्यमरः धीरा निःसंदेहा उन्नता व





57

वति अपिः वार्थे निर्गता श्रीः शोभा यस्या सौ तथा यश्च कृशोप्य कस्मात् स्थवीयान् भवति यश्च स्थवीयान कस्मात् कृशो भवति अतिशयित स्थूलः स्थवीयान्
दूरेतिः स्थवारेशः ७ यश्च अहेतोः ज्वरादिहेतुं विना अतीव अतिशयितं तुच्छं मत्स्यं अतिभक्षयन् भस्मकादिव्याध्यादिहेतुं विना अतीव बहु भूरि अत्तिय
श्च सदसत्प्रवृत्तौ विषये अतीत सात्म्यः सच्च असच्च सदसती तत्र प्रवृत्तिः तस्यां अतीतं लक्षं सात्म्यं स्वाभाविकं येन स तथा यः स्वभावेन सत्प्रवृत्तिः सन् स
दैव सत्प्रवृत्तिरित्यर्थः अपि वार्थे यो वा अंगुलिक्रांतविलोचनात् सन् चंद्रकं मेचकं नेक्षते अंगुलीभिः क्रांते आक्रमिते लोचने तेन त्राप्तौ येन स तथा मे
चकवर्णो मयूरपत्रनिभः चंद्रकं खद्योता इव द्योतमानं स्वात्तु भवसिद्धं ८ मध्ये ललाट स्येति मध्ये ललाटं पारे मध्ये षष्ठ्या वेत्यव्ययीभावः मणिबंधं धारय

अतीवतुच्छं बहु चात्त्यहेतोरतीतसात्म्यः सदसत्प्रवृत्तौ अप्यंगुलिक्रांतविलोचनांतो न मेचकं चांद्रकमीक्षते यः ८ म
ध्येललाटं मणिबंधधारी न चाल्पिकां पश्यति यः कलाचीं अहेतुकं यः शवगंधिगात्रः सर्वत्र सीमंतितमूर्धजो वा ९ ॥
अपि स्वरघ्नो मनस्वः शरीरात्स्वद्यः स्त्रवद्धामविलोचनो वा निरीक्षते सत्वममानुषं वा विस्त्रस्तनासान यस्तुतिर्वा ॥ १० ॥

तीति मणिबंधधारी यो ललाटमध्ये मणिबंधं धृत्वा अल्पिकां कृशां कलाचीं न पश्यति तलहस्ताधस्तन्संधिर्मणिबंधः तदधो हस्तभागः कलाची स्त्रीणां करभूष
णस्थानं यश्च अहेतुकं अकारणं शवगंधिगात्रः शवस्य गंध इव गंधो येषां तानि शवगंधीनि तानि गात्राणि यस्यासौ तथा यो वा सर्वत्र सीमंतितमूर्धजः सीमं
ताः संजाता येषां ते सीमंतिताः ते मूर्धजाः केशा यस्यासौ तथा सीमंतः स्त्रीणां ललाटादूर्ध्वं केशवेशविशेषः प्रसिद्धः ९ अपि वार्थे यो वा शरीरात् स्वरघ्नो मनस्वः
स्वरंति गलंति रोमाणि नखानि च यस्यासौ तथा यो वा अमानुषं मानुषादन्यं सत्वं प्राणिनं पिशाचादिकं निरीक्षितो यो वा विस्त्रस्तनासान यनस्तुतिः नासा नासिका

निरोमशानिरोमारेः शइतिमतुवर्थे शः रोमशानि अंगानि यस्याः सा तथा अंगगात्रेतिङीप् कृशा लघुः कुटिला वक्रा चलती अस्थिरा क्रूरा उग्रा सकुज्ञा सकपटा उपधिः छद्मकैतवइत्यमरः एवंविधा दृष्टिर्यस्याः सा कृशकुटिलचलक्रूरसकुद्मदृष्टिः वामा अप्रदक्षिणा आवर्ता रोमा यस्याः सा तथा विकटं वि सदृशं तरतः नृत्यतः ते विकटनटती ते भ्रुवौ यस्मिन् तद्विकटनटद्भ्रु विशालं विस्तीर्णं उन्नतमुच्चं विकटनटद्भ्रु ललाटं यस्याः सा तथा वद्भ्रु चलात्रङीष विशालोन्नतललाटाविकटनटद्भ्रूश्चेत्यर्थः अंसांगुलिभ्यां कनिष्ठिकोपकनिष्टिकाभ्यां उर्वींभूमिं न स्पृशंती अर्थाच्चरणस्य यस्याश्चरणगतकनिष्टिकोप कनिष्टके भूमिं न स्पृशत इत्यर्थः अनियतमसंख्यातं बहु भूरि भुनक्तीति अनियतबहुभुक् एवंविधा गेहिनी गृहिणी देहिनी रुक् स्यात् देहोस्ति यस्याः



वामावर्ता विशालोन्नतविकटनटद्भ्रुललाटास्पृशंती नोर्वीमंसांगुलिभ्यामनियतबहुभुग्गेहिनी देहिनी रुक् ॥ १६ ॥ यास्फि ग्ललाटोदरलंबिनी सा स्यात् कांतकांतानुजताततहंत्री नितंबिनी स्वल्पनितंबगुह्या दुह्या सती दीर्घगला कुलघ्नी ॥ १७ ॥

सा देहिनी स्त्रीः रुग्गुजा चोपतापइत्यमरः सा स्त्री मूर्तिमान् रोग एवेत्यर्थः १६ उपजातिः या नितंबिनी स्त्री स्फिग्ललाटोदरलंबिनी सा क्रमेण कांत कांतानु जताततहंत्री स्यात् स्त्रियां स्फिजौ कटिप्रोथाविति अमरः स्फिजौ च ललाटं च उदरं च तैर्लंबते सा तथा यादीर्घस्फिक् दीर्घललाटा दीर्घोदरीत्यर्थः कांतश्च कांतानु जता तौ च तेन तथा कांतो भर्त्ता कांतानुजो भर्तृकनीयान् कांततातः श्वशुरस्तेषां क्रमेण नाशयतीति यास्वल्पनितंबगुह्या सा पतिं दुह्यात् विरोधयती पुंश्चा नि तंबः स्त्रीकट्या इत्यमरः ‾‾‾‾‾ गुह्यं योनिः स्वल्पनितंबा स्वल्पगुह्या चेति या दीर्घगला सा कुलघ्नी भर्तृकुलनाशिनी १७ उपजातिः या स्त्री धमनौ शिरा यां अतिहृस्वा अतिकृशा सा पुरंध्री निःस्वा निर्धना भवति यस्या अतिकृशाः शिरा इत्यर्थः नाडी तु धमनिः शिरेत्यमरः दाराः स्यात्कुटुंबिनी पुरंध्रीत्यमरः तत्र

र्धमानः आरंभेषु कार्यारंभेषु कार्यारंभेषु रुचिः प्रीतिर्यस्य सौ तथा प्रशस्तं यशो स्य स सौ यशस्वी प्रशंसा यां मत्वर्थे विनिः १३ आख्यानकी ईक्षणे नेत्रे स्निग्धाः स्नेहाः ईक्षणे च त्वक् च नखाश्च दंताश्च केशाश्च यस्य सौ तथा युवा मध्यमवयस्कः सुष्टुवासो यस्य सौ तथा अमलिनवस्त्रः परिवीता अति संवृता चेष्टा शरीरेंगित यस्य सौ तथा व्येजसे न रणो स्त्रियाः मुखमिव मुखं यस्य सो स्त्रीमुखः न च स्त्रीमुखः नितरां प्रभा यस्य सा निःप्रभा शांता मूर्तिर्यस्य सौ तथा अतिकृष्णो ईक्षणतारकौ वा न भवति ईक्षणयो नेत्रयो स्तारके ईक्षणस्तारके अतिकृष्णा ईक्षणतारके यस्य सौ तथा १४ उपजातिका उचित योग्यं तस्य भावः औचित्यं तच्चरति आचरतीति तथा शुचिरनिंदिताचारः इंगितं परस्परचेष्टितं तज्जानातीति तथा विशालं विस्तीर्णं हस्तौ च आननं च बाहु च वक्षश्च यस्य सौ तथा मुख्यलक्षणान्या

स्निग्धेक्षणत्वङ्नखदंतकेशो युवा सुवासाः परिवीतचेष्टः ।। न स्त्रीमुखो निप्रभशांतमूर्तिर्न चातिकृष्णेक्षणतारको वा १४
औचित्यचारी शुचिरिंगितज्ञो विशालहस्ताननबाहुवक्षाः सर्वोपि सत्वाकृतिमान्कुलीनः कन्याप्रदानाय वरो नरोगी १५
रम्यभ्रु श्यामोन्नतोष्ठी पृथुकरचरणा ह्रस्वरुग्राग्रकेशा निःशोचारोमशांगी कृशकुटिलचलस्कूरसद्भ्रूनदृष्टिः ।। ।। ।।

ह सर्वोपीति सर्वोपि एभिः सर्वलक्षणैः संपन्नोपि नरः सत्वाकृतिमान् कुलीनः नरोगी स्यात् सत्वस्य आकृतिर्यस्य सौ तथा सात्विकप्रकृतिरित्यर्थः कुलीनो विख्यातसत्कुलप्रसूतः नरोगी अव्याधितः किमर्थं कन्याप्रदानाय एवं वरलक्षणान्युक्त्वा वधूलक्षणान्याह १५ स्नग्धरा रम्यभ्रुभिः श्यामौ रम्यभ्रु श्यामौ तौ उन्नतौ उच्चौ ओष्ठौ यस्याः सा तथा कासिको ह्रस्वेति ङीप् करौ च चरणौ च करचरणं पृथुकरचरणं यस्याः सा तथा पृथुहस्ता पृथुचरणा चेति रुक्षाणि अस्नि ग्धानि अग्राणि येषां ते रुक्षाग्राः रूक्षा रुक्षाग्रा केशा यस्याः सा तथा अत्र ङीषो विकल्पान्न ङीप् पृथुचेभीदः शौचं निःशौचा शौचहीना रोमाणि संति येषु ता

वंधः रहिता च गृहबंधनाय भवति गृहं गृहिणी तस्या वंधनमतिप्रीतिः सा च रेखा दंहीयसी अतिशयेन बहुला वंहीयसी वंशविवर्धनाय भवति प्रियस्थिरे
त्यादिना बहुलस्य वंहादेशः २१ उपजातिः जीवितरेखा आयुष्यरेखा कनिष्ठिका जीवित योर्मध्ये करभप्रदेशे स्थिताः मिश्राः परस्परं कांतकलत्ररेखाः सुःपुरु
षहस्ते तावंत्यस्तस्य भार्याः स्त्रीहस्ते तावंतस्तस्याः कांता इत्यर्थः मणिबंधादाकनिष्ठं करस्य करभो बहिरित्यमरः परे उर्वरिते अस्मिन्करभे स्थिताः सा मातुर
वर्गस्य रेखाः अपत्यरीत्या ज्ञेयाः स मातुरपत्यानि सामातुराः सोदराः मातुरुत्संख्यासंभद्रपूर्वायाइत्यण् उच्चयथांगुष्ठतल पुत्राः कन्याश्च लसितास्तेषामायु
ष तदृदस्मिन् जीवितरेखाया अधस्थिते करभे भ्रातरो भगिन्यश्च तेषामायुश्च लक्षणीयमिति भावः २१ अनामिकाया मूलं तस्य विभूषणमेव विभूषणं या



ऐश्वर्यरेखाशिखरेण मूलाद्युनक्ति यासौ पितृवंशरेखा नीरंध्रबंधा गृहबंधनाय वंहीयसी वंशविवर्धनाय २१ कनिष्ठि
काजीवितरेखयोः स्यान्मध्ये मिथः कांतकलत्ररेखा अपत्यरीत्या करभे परस्मिन्भवंति सामातुरवर्गरेखाः २२ अनामि
कामूलविभूषणया पुण्यस्य रेखा तदवाप्तिहेतुः निःसीमसीमंतितपंचशाखा करोर्ध्वरेखा न करोति राज्यं॥ २३॥ ॥

रेखा नित्यनपुंसकत्वात्स्त्रीविशेषणत्वेपि क्लीबत्वं अनामिकामूले उर्ध्वस्थिते इत्यर्थः सा रेखा पुण्यस्य रेखा कथंभूता तदवाप्तिहेतुः तस्य पुण्यस्य अवाप्तिः
प्राप्तिः तस्य हेतुः नित्यपुल्लिंगत्वात्स्त्रीविशेषणेपि पुल्लिंगत्वं तस्यां सत्यां पुण्यप्राप्तिरस्तीत्यर्थः निर्गता सीमा यस्या सौ निःसीमः सीमंतितः पंचशाखो यस्मिन्नि
ति सीमंतितः पंचशाखा यस्या सो पंचशाखः पाणिः निःसीमः सीमंतितः पंचशाखो यया सा तथा सा ऊर्ध्वरेखा कस्य राज्यं न करोति अपितु सर्वस्यापि राज्यं करो
तीत्यर्थः पंचशाखः शयः पाणिरित्यमरः पयोर्ध्वरेखया दिग्धा कुलमिव पाणितलं भवति सा व श्यं राज्यप्रदेत्यर्थः इत्यादीनां सर्वासामपि शुभाणां रेखा साधारण्ये

तस्यां धमनी या अतिपृथुः सा प्रचंडा अत्युग्रा स्यात् यस्याः शिरा अतिस्थूला इत्यर्थः याहसिते हास्ये सति कपोलकूपा कपोलयोर्गंडयोः कूपौ गर्तौ यस्याः सा
तथा सा अशीला दुराचारा भवति या कूर्मोदरी कूर्मसदृशजठरा सा दुःखदरी दुरात्मा भवति दुःखस्य दरी बदरी दुःखदरी दुःखगुहा दुरात्मा दुष्टस्वभावा डाव
भान्यामन्यतरस्यामिति डाप् एवं वरवध्वोः सर्वशरीरलक्षणमुक्त्वा विशिष्टं हस्तचरणगतरेखालक्षणमाह श्लोकसप्तकेन १८ इंद्रवज्रा अंगुष्ठतले
हस्तांगुष्ठमूलाधःस्थिताभिरेखाभिः विपुलाल्पिकाभिः क्रमेण पुंस्त्रीप्रसूतिर्वाच्या यावंत्यो विपुलरेखास्तावंतः पुत्राः यावंत्यः कृशास्तावंत्यः कन्या इत्य
र्थः अमूभिः रेखाभिः अछिन्नभिन्नाभिः अछिन्नाभिः अभिन्नाभिश्च अस्याः पुंस्त्रीप्रसूतेः आयुरायुष्यं अखंडं परिपूर्णं वाच्यं तदन्याभिस्तद्विपरीताभिः

निःस्वातिह्रस्वाधमनी पुरंध्री प्रायेण तत्रापि पृथुः प्रचंडा कपोलकूपा हसितेप्यशीला कूर्मोदरी दुःखदरी दुरात्मा १८ रे
खाभिरंगुष्ठतलेंगनानां पुंस्त्रीप्रसूतिर्विपुलाल्पिकाभिः अछिन्नभिन्नाभिरखंडमायुः खंडं तदन्याभिरमूभिरस्याः १९ ए
का तिर्यकृतर्जनीं याति रेखा तर्जन्यंगुष्ठांतरालेतदन्या ते द्वे स्यातामायुरैश्वर्यरेखे तत्सौंदर्यसुंदरत्वं तयोः स्यात् ॥२०॥

छिन्नभिन्नाभिः खंडमल्पमायुर्वाच्यं तासु रेखासु या या रेखा अछिन्नाभिन्ना तदपत्यं पूर्णायुः या छिन्नभिन्ना तदल्पायुरित्यर्थः १९ शालिनी एका रेखा त
र्जनीं प्रदेशिनीं प्रतितिर्यग्याति तदन्या रेखा तर्जन्यंगुष्ठयोरंतराले स्थिता द्वे क्रमेण आयुरैश्वर्यरेखे स्यातां प्रथमा आयुष्यरेखा द्वितीया ऐश्वर्यरेखेत्यर्थः
तयो रेखयोः सौंदर्ये सति अरुग्गंभीरे तिवक्ष्यमाणसौंदर्ये सति तयोः आयुरैश्वर्यरेखयोः सुंदरत्वं चारुत्वं स्यात् २० उपजातिः या रेखा मूलात्पाणिमूला
न्निर्गता सत्यैश्वर्यरेखायाः शिखरं अग्रं तेन सार्द्धं युनक्ति योगं प्राप्नोति सा पितृवंशरेखा भवति तादृशः पितृवंशो ज्ञेय इत्यर्थः सा रेखा नीरंध्रं वंधानिः छिद्रा

अथनिमित्तानि तत्रवरणकाले पक्षिचेष्टितमाह उपजातिः वरस्य कन्यावरणसमये यदा वरः कन्यां वरीतुमिच्छति तस्मिन्काले यः कश्चनः पुल्लिंगः पक्षी दक्षिणचेष्टितः दक्षिणांगे कंडूयनंकंपनादिभिश्चेष्टितो भवति सवरेण्यः अतिशुभः स्यात् का इव दुर्गा इव दुर्गा कृष्णाचीटिका स्त्रीलिंग पक्षिषु मध्ये दुर्गापि दक्षिणचेष्टिताशुभेत्यर्थः अर्थादनयोर्वामचेष्टितमशुभमिति कुमारीनरं चेद्वृणुयात्तस्मिन्काले तयोः पुल्लिंगपक्षिदुर्गयोः अदक्षिणं वामांगचेष्टितं दृष्टं शुभमाह २७ अथशुनश्चेष्टितमाह अनुष्टुप् यत्र कुमारी कांक्षिणी वरं वरीतुमिच्छति तत्र शुनः शुनकस्य दक्षिणां सकीयदक्षिणभागे गतिरिष्टा शुभा यत्र वरः स तां कुमारीं वुवूर्षति वरीतुमिच्छति तत्र शुनोगतिरदक्षिणा स्वस्य वामभागे चेत्तदा शुभा २८ अथोपश्रुतिशकुनमाह शार्दूलविक्रीडितं अक्षतैस्तंदुलैः परिपूरिते प्रस्यादि



वरस्य कन्यावरणे वरेण्यो दुर्गैव योदक्षिणचेष्टितश्च अदक्षिणं चेष्टितमिष्टमाहुस्तयोः कुमारी वृणुयाद्वरं चेत् २७ ॥
शुनोगतिर्दक्षिणेष्टा कुमारी यत्र कांक्षिणी अदक्षिणा यत्र तत्र वरस्तां वुवूर्षति २८ आरोप्याक्षतपूरिते गणपतिं प्रस्या
दिपात्रे शनैः संमार्जन्यववेष्टिते युवतयस्तिस्रः सकन्यानिशि निर्यातारजकादिवेश्मसु करे कृत्वातमभ्यर्चितं यांवाचं
शृणुयुस्तदर्थसदृशी सिद्धिः किलोपश्रुतौ २९॥

पात्रे प्रस्थकुटपाहीनां मानपात्रे संमार्जन्या अववेष्टिते आच्छादिते गणेशप्रतिमामारोप्य प्रक्षि
प्य सकन्याः एकया कुमार्या सहितास्तिस्रो युवतयः सुवासिन्यः निशिरात्रौ रजकादीनां वृत्स्नानिजकरे मद्यकारादीनां वेश्म सुगृहसमीपे शनैर्निर्याताः किंकृ
त्वा एवंविधगणपतिंगंधपुष्पादिभिरर्चितं पूजितं करे हस्ते कृत्वा तस्मिन्गृहे स्थितानां मनुजानां यां वाचं यद्वचनं शृणुयुः आकर्णयेयुः तस्यार्थः अभि
प्रायः तेन सदृशी सिद्धिः चिंतितकार्यस्य सिद्धिर्ज्ञेया किलेति निश्चये अत्राधिवासनमंत्रादिकं विधानमालाद्युक्तं ज्ञेयं इत्यादिलक्षणैः परीक्षितां कन्यां व

न अतिशयितत्वमाह २३ विपरीताख्यानकी अरुणाः स्निग्धाः गंभीरा निम्ना मनोहराः सुंदराः अंतः अभ्यंतरे मधुवत्पिंगलाः न च अतिबद्धाः न अतिसंकीर्णाः
एतादृशाभिरुक्ताभी रेखाभिः पुंस्त्री फलयोः स्फुटत्वं शुभफलाधिक्यं स्यात् केषु अवाम वामेषु अंगेषु पुरुषस्य दक्षिणहस्तचरणादिषु स्त्रियां वामेष्वित्यर्थः
अथ करे चरणे वा राज्यचिन्हान्याह २४ शिखरिणी सरोजं कमलं श्रीवृक्षो विल्ववृक्षः ध्वज केतुर्गजो हस्ती तिमिर्मत्स्यः स्तंभ कलशौ प्रसिद्धौ स्रक् माला आ
दर्शो मुकुरः छत्रमातपत्रं अंकुशः प्रसिद्धः कुलिशं वज्रं भृंगारः करकः गिरिः पर्वतः रथः प्रासिद्धः अश्वस्तुरगः श्रीवत्सो विष्णुवक्षसि रोम्णां प्रदक्षिणा

अरुणगंभीरमनोहराभी रेखाभिरंतर्मधुपिंगलाभिः नचातिबद्धाभिरवामवामेष्वंगेषु पुंस्त्रीफलयोः स्फुटत्वं २४ स
रोजश्रीवृक्षध्वजगजतिमिस्तंभकलशस्रजादर्शछत्रांकुशकुलिशभृंगारगिरिभिः रथाश्वश्रीवत्सव्यजनयवयूप
प्रभृतिभिर्नरानार्योराज्यंदधतिपदपाणिप्रणयिभिः २५ अर्चितवचनमुन्नतं मनो निर्विशेषसुखदं वपुर्दृशां अस्ति
चेदघपराङ्मुखा मतिर्लक्षणैः किमपरैर्नृयोषिता २६

वर्त्तः नंद्युपचारात्स्य दक्षिणावर्तमात्रं गृह्यते व्यजनं तालं यवो धान्यविशेषः यू
पो यज्ञस्तंभः प्रभृतिभिरित्यादिभिश्चिन्हैः पदपाणिप्रणयिभिः चरणगतैः पाणिगतैर्वा नराः पुरुषाः नार्यस्त्रियः राज्यं दधति धारयंति एभिर्लक्षणै राज्य
प्राप्तिरित्यर्थः २५ अथ मुख्यलक्षणान्याह रथोद्धतं यदि वचनं भाषणं अर्चितं पूजितं स्यात् मनो हरमित्यर्थः मनः मानसं उन्नतं पृथुलं नाल्पविषये मनः
प्रवृत्तिरित्यर्थः वपुः शरीरं दृशां नेत्राणां निर्विशेषसुखदं निर्विशेष अधिकं सुखं तत्प्रददातीत्यर्थः मतिर्बुद्धिः अघपराङ्मुखी पातकात्पराङ्वृत्ता तदा नृयो
षितां पुरुषाणां स्त्रियाणां वा परैर्लक्षणैः किं एषु चतुर्षु लक्षणेषु सत्सु अन्येषां शुभलक्षणानां किमपि न प्रयोजनमिति भावः इति सामुद्रिकलक्षणानि २६
१२

मातृष्यश्चेति तत्र देव्यो गौरीपद्मेत्यादयो ब्राह्मी माहेश्वरीत्यादयश्च मातृष्यः मातृमातामह्यादयश्चतुर्विंशतिमितोक्ताः तासां यत्नः पूजादिकं कुलकर्म शांतयः कुलोक्ताचारवशतो याः शांतयः कुलदेवताराधनादयः ता अविघ्नमातरः तन्नु विस्तारे निर्विघ्ननिष्पादिताः अशुभघ्नं तिनाशयंति चः समुच्चये पुलोमजापूजनं च अशुभं हंतीत्यर्थः अतः शची मातृकापूजादिकमवश्यं कर्तव्यमिति भावः ३२ इति श्री सकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मज गणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां मिश्राध्यायश्चतुर्दशः १४ अथ वधूवरप्रश्नाध्याय आरभ्यते तत्रादौ वधूप्रश्नमाह वसंततिलका अस्मा कमस्याः कन्याया लाभो भविष्यति न वेत्यस्मिन् प्रश्नकाले यल्लग्नं तस्माल्लग्नादि कर्मायसूत्रसहजस्मरगः दशमैकादशपंचमतृतीयसप्त

घ्नंति चाशुभमविघ्नमातृमातृयत्नकुलकर्म शांतयेत् ३२ इति विवाहवृंदावने मिश्राध्यायश्चतुर्दशः १४ अथ वधूवरप्रश्नाध्यायः कर्मायसूत्रसहजस्मरगो मृगांकः स्त्रीपुंससंगमयिता यदि जीवदृष्टः स्वर्क्षांशिशुक्रशशिदृष्टयुतानि कन्यालब्धौ वधूगृहदृक्काणनवांशकावा १

यो मृगांकश्चंद्रो जीवेन गुरुणा दृष्टस्तदा स्त्रीपुंससंगमयिता स्यात् स्त्रीपुंसेति चतुरा दिलाभाधः तयोः संगमं योगं करोतीति स्त्रीपुंससंगमयिता कन्यालाभं करोतीत्यर्थः अयं योगः कन्याया वरलाभप्रश्नेपि अविशेषात् योगांतरमाह स्वर्क्षांणीति शुक्रशशिभ्यां दृष्टानि युतानि वा स्वक्षाणि लग्नं गतानि स्वराशयश्च द्वशुक्रराशयः कर्कि तु लो वृषभाः कन्यालब्ध्ये कन्यालाभाय भवंति योगां तरमाह वधूगृहेति वधूसंज्ञाः समराशयो वृषकर्कटादयस्तेषां गृहाणि दृक्काणा वा नवांशका वा लग्नगताः शुक्रशशिदृष्टयुताः कन्यालब्ध्ये भवंति योगां तरमाह १ युग्मस्थे गो समराशिस्थितौ शशिसितौ द्विपदांगनांशेस्थितौ द्विपदश्चासावंगनांशश्च स च कन्यांश एव तत्रस्थितौ तनुं लग्नं इ समाणौ पश्यंतौ

रो वरयेत्कन्यापि वरमित्युक्तं तत्र कन्यावरणनक्षत्राणि कुलधर्मानतिक्रमणं चाह २९ उपजातिः श्रुतिः श्रवणः त्रिपूर्वाः पूर्वात्रितयं वसवो धनिष्ठा व
न्हिः कृत्तिका मित्रोऽनुराधा विश्वे उत्तराषाढा अनिलः स्वाती एषु नक्षत्रेषु कुमार्यो वरणं स्यात् अथ कुलधर्मः एत आर्याः वृद्धतमाः स्वकुलोक्तस्वकुलपरंपराग
तानां आचरेयुः तच्चेत् सापि नावमन्येत तस्यावज्ञा मनसापि न कार्या किं पुनः साक्षात् अतस्ते कुलधर्मा अवश्यं कर्तव्या इत्यर्थः तत्राप्यागमविरुद्धाः न कार्या दे
शाचाराः कुलाचारा ये तु विध्यविरोधिन इति स्मरणात् ३० अथ वेदिकानिर्माणं तत्प्रभृतीनां कालं चाह रथोद्धता ३ वेदिकां तथा रचयेत् तथा कथं यथा द्
यं वेदिका गृहं प्रविशतः पुरुषस्य दक्षिणे भागे भवति तस्याः लक्षणभूषणादिकं नारदादिभिरुक्तं ज्ञेयं इत्यादीनां विवाहकृत्यानामारंभकालमाह श्रुतिरिति

श्रुतित्रिपूर्वावसुवन्हिमित्रविश्वानिलर्क्षे वरणं कुमार्याः तच्चावमन्येत न चेत्सापि यदाचरेयुः स्वकुलोक्तमार्याः ३० वेदि
कां विरचयेद्यथा तथास्या दिशं प्रविशतश्च दक्षिणे स्फुर्जनाश्रययवोप्तिवर्णिकाः षण्नवत्रिदिवसेषु नाग्रतः ३१ कन्यको
क्तविधिवत्पुलोमजापूजनं सयुवतिः समाचरेत्

जनाश्रयो मंडपः मंडपोऽस्त्री जनाश्रय इत्यमरः यवोप्तिर्यवापः अंकुरार्पणमिति याव
त् तत्प्रकारः शौनकस्मृत्यादिषूक्तः वर्णिका लोकप्रसिद्धाः अपूपविशेषाः यद्वा वर्णिका रंगवल्यादयः एतदुपलक्षणेन दलनकंडनवारकादियुक्तानि एत
तानि अग्रतः पूर्वं लग्नदिनमारभ्य षण्नवत्रिषु षष्ठतृतीयनवमेषु दिवसेषु नस्युः पश्चादपि तद्दुद्वासनादिकं च ज्ञेयं केचित्तु नवमदिनं शुभमाहुः देशाचा
रतो व्यवस्था ३१ अथेंद्राणीपूजनादिकमाह युवतिभिः सुवासिनीभिः सहिता सयुवतिः कन्यका उक्तविधिवत् शुभगामथेंद्रपत्नीं घटका रमृदा सुलक्षणा
वयवामित्यादिना शौनकाद्युक्तविधिना पुलोम्नो जाता पुलोमजा इंद्राणी तस्याः पूजनं समाचरेत् अयं मातृकादिपूजाद्युपलक्षणं मातरो ऽपि विधातव्यो

कवत्स्यात् अतोवधुवरस्येत्येकत्वं ३ अथ वधूवरप्रश्नकाले शुभाशुभयोगानाह प्रश्नेकाले उदयः प्रश्नोदयः प्रश्नोदयः प्रश्नलग्नं तस्मात्प्रश्नोदयात् मृतरोचिषिचं
द्रमसि षण्मतिस्थे षष्ठे अष्टमस्थे वा सति अयमेकः चंद्रकृतो योगः तत्र तस्मिन् चंद्रमसि मूर्तौ लग्नस्थे सति अवन्या अपत्यं भावनेयः भौमः क्रूरे कारादिति
ईक्षिकृते स्त्रीव्योदक्त तस्मिन्भौमे मदनस्थे राशिसप्तमस्थे वसतिचः समुच्चये अयं चंद्रभौमकृतो द्वितीयो योगः तत्वस्तयोर्लग्नं सप्तमयोः अशुभसंगतयोः पा
पग्रहयुक्तयोः सतोः अयं पापग्रहकृतस्तृतीयो योगः एषु योगेषु क्रमाद्वसुमहीमुनिसंमितव्दैर्वरस्यनाशः स्यात् प्रथमेयोगे अष्टमे वर्षे द्वितीये एकवर्षे
तृतीये सप्तमे वर्षे इत्यर्थः ४ जामित्रगौ सप्तमस्थौ विधुसितौ चंद्रशुक्रौ वधुं विधवां कुरुतः सौरिः शनिः कुजो भौमः जामित्रगः असाध्वीं दुराचारांक

प्रश्नोदयात्समृतरोचिषि षण्मतिस्थे मूर्तौ च तत्र मदनस्थराशिचावनेये तत्वस्तयोरशुभसंगतयोर्वरस्यनाशः क्रमा
द्वसुमहीमुनिसंमितव्दे ४ जामित्रगौ विधुसितौ विधवामसाध्वीं सौरिः कुजौ सुरमहेज्यबुधौ धनाढ्यां दीर्घायुषं वपु
षि सुप्रसवां प्रसूतौ स्त्रीजातकोक्तमखिलं खलु चिंत्यमत्र ५

रोतिशौनकीये तु शनिर्मृतप्रजां भौमो मरणयुक्ताम् इति तथापि फलं दुष्ट
मेव महाश्वासौ रुज्यश्च महेज्यः असुराणां महेज्यः शुक्रः बुधः प्रसिद्धः तौ जामित्रगौ धनाढ्यां कुरुतः वपुषि लग्ने स्थितौ दीर्घायुषं कुरुतः प्रसूतौ पंचमे स्थि
तौ सुप्रसवां शुभसंततिं कुरुतः कुत्रचित्सुरमहेज्यो इति पाठः तद्सत् यत् आह शौनकः यदि एकः कलग्नस्थो भृगुसौम्यो जीविनीं कुरुतः पंचमस्थो पत्रान्
जामित्रगतौ विपुलं धनमिति अस्मिन् वधूवरप्रश्नकाले स्त्रीजातकोक्तमखिलं शुभाशुभं चिंत्यं एवं कन्या वरोपलब्धिमुक्त्वा तल्लाभे सति दलनकंड
नादिविवाहकृत्येषु शुभकालमाह ॥ ५ ॥ ॥ ॥ ॥

तदा तौ तद्राशिपिशुनौ स्तः तस्याः कन्यायाः आप्तिस्तस्याः पिशुनौ सूचकौ कन्यालाभसूचकाविस्यर्थः अत्र बलिनाविति शौनकीये विशेषोऽस्ति योगांतरमाह नरा
रीति उदितं शुद्धयं प्राप्तं लग्नगतमित्यर्थः उदितं नारीनवांशं स्त्रीनवांशं वृषकर्कादिकं शशिसितावीक्षमाणौ तद्राप्तिपिशुनाविस्यनुवृत्तिः योगांतरमाह खच
रा इति परेऽपि शुक्रशनैश्चरव्यतिरिक्ता अपि खचरा स्त्रैणसंगाः समराशिस्थिताः स्त्रीणामिमानि स्त्रैणानि स्त्रीपुंसाभ्यां नञ्स्नञाविति नञ् विलसंतः स्निग्धाः
उज्ज्वलाः प्रकाशमानाः वीर्यभाजः सबलाः उदितं नारीनवांशमीक्षमाणाः कन्याप्राप्तिसूचका इत्यनुवृत्तिः २ अथ कन्यायावरोपलब्धिप्रश्नमाह एवमनेन नस
र्त्राणि शुक्रशशीत्यादिविधिना नराः पुरुषा नितंबिनीनां स्त्रीणाम् उपनमंति समागच्छंति लभ्या भवंतीति यावत् कैः नरदृक्काणनवांशदृग्भिः पुंस्त्वे चरैः

युग्मर्क्षगौ शशिसितौ हि पदृंगनांशेस्यातां तदाशिपिशुनौ तु नमीक्षमाणौ नारीनवांशमुदितं खचराः परेऽपि स्त्रैणसंगाविलसदुज्ज्वलवीर्यभाजः २ एवं नरा नरदृक्काणनवांशदृग्भिः पुंस्त्वे चरैरुपनमंति नितंबिनीनां यल्लिंगि बालकपशुप्रभृतीगितं स्यात्प्रश्नक्षणे तदुत थैव वधूवरस्य ३

नराविषमराशयो मेषमिथुनादयस्तेषु ये द्रेष्काणनवांशास्ते नरद्रेष्काणाः नरनवांशा इति तास्पश्यं
ति तेन नरदृक्काणनवांशदृशः तैः पुंस्त्वे चरैः पुरुषग्रहैः रविभौमगुरुभिः यत्तदुक्तं भवति स्त्रीग्रहौ किल शशिसितौ यत्र शशिसितावुक्तौ तत्र पुंग्रहा ग्राह्याः यत्र स्त्री
दृक्काणस्तत्र नरदृक्काणः यत्र स्त्रीनवांशस्तत्र नरनवांशः यत्र स्त्रीराशिस्तत्र नरराशिरिति एवमनेन विधिना उक्तयोगैरेव कन्यायावरोपलब्धिर्ज्ञेयेति अथ नि
मित्तानि यल्लिंगीति प्रश्नक्षणे प्रश्नकाले लिंगिनः कापालिकाः बालकाः प्रसिद्धाः पशवः छागवृषतुरगादयः प्रभृतिग्रहणात् स्त्रीसुकोन्मत्तादीनां ग्रहणं तेषां य
दिंगितं चेष्टितं तद्वधूवरस्य तथैव भवति उरित्यव्ययं निश्चये तिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वे इत्यत्र द्वंद्वे तरेतरयोगद्वंद्वेप्येकत्वज्ञापकात्सर्वोपि द्वंद्वो विभाषया ए

मानास्तेषांद्वंद्वं तद्दवति प्रीणयतीतितथा अयंभावः यथा कश्चन आतपेपीड्यमानो वनेगत्वासुखेनरमते तद्वत्स रमतेः पीड्यमानोस्मिन्द्वंद्वावनेसुखे
नरमतामिति अथांते श्रीप्रयोगः समाप्तालंकारे यथात्रग्रंथारंभे ७ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायांविवाहद्वंद्वाव
नटीकायां वधूवरप्रश्नाध्यायः पंचदशः १५ अथस्ववंशवर्णनपूर्वकंग्रंथालंकारमाह उपजातिः भरद्वाजश्चासौमहर्षिश्चतस्यवंशेभरद्वाजगोत्रेविश्वा
वतंसे अवतंसः कर्णपूरः विश्वस्य अवतंसइवावतंसः तस्मिन् विश्ववंद्य इत्यर्थः जनार्दनोनामाभूत् कथंभूतः श्रुतीति श्रुतीनांवेदानांतत्त्वंयाथार्थ्यंतद्वे
त्तीतितथा औदीच्या औदीच्यजातीयजनाः तस्मिन्देशेज्ञातयोनेकविधाः प्रसिद्धाः तेषांचारित्रंप्रचारस्तस्य पंथाः मार्गस्तंप्रवर्तयतीतितथा औदीच्या

अथविवाहद्वंद्वावनेस्ववंशावर्णनः अभूद्भरद्वाजमहर्षिवंशेविश्वावतंसेश्रुतितत्त्ववेदी औदीच्यचारित्रपथप्रवर्ती
जनार्दनोयाज्ञिकचक्रवर्ती १ अस्तिश्रियादित्य इतिस्मतस्यसूनुः श्रियादित्य इतिद्वितीयः त्रिस्कंधपारंगतरंगमल्ल
स्तदात्मजोराणगइत्युदीर्य २ श्रीकेशवः सुकविरध्ययनाध्वनीनव्यूहान् प्रतर्पयितुमर्थपयः प्रवाहैः ॥ ॥ ॥

चारमार्गप्रवर्तकइत्यर्थः अनेनस्वधर्मोपासकइतिसूचितं याज्ञिकेषुचक्रवर्तीवचक्रवर्ती श्रेष्ठतमइत्यर्थः तस्यजनार्दनस्यद्वितीयः सूनुः श्रियादित्य
इत्यस्तिस्म आसीत् इति असूर्यनामेत्याह कइव श्रियारीप्सा आदित्यइवतस्य श्रियादित्यस्य आत्मजः उदीर्येराणागत इत्यासीत् उदीर्यतेतदुदीर्यं कथ
नीयंतस्मिन्नाम्नीति यावत् राणगनामेत्यर्थः कथंभूतः त्रिस्कंधेति त्रिस्कंधाः होरागणितसंहितास्याः तेषांपारंगता अशेषज्ञातारः तेषांरंगेषुद्वंभूमौमल्ल
इवमल्लः मल्लोबाहुयुद्धकुशलः त्रिस्कंधज्योतिःशास्त्रविदांपराभवकृदित्यर्थः ३ वसंततिलका अस्यदैवज्ञस्यराणगस्यसुतः श्रीकेशवः सुकविः शोभ

इतविलंबितं दलनकंडनादिषुसकलकर्मशुभतिथिवारफलानिनक्षत्रादिफलानिपरैरन्यैःपदेपदेविरचितानिपदेपदेइतिलौकिकाभिप्रायेणोक्तंअस्मि
न्केषुअपिदृश्यफलानिविशेषाभावेप्युक्तानीत्यर्थः तानिदृश्यफलानीतिकारणादस्माभिर्नोक्तानिकेचित्परोक्षाभावेपिभूतमात्रेलिंगमिच्छंतितथाच
मुग्धबोधेभवद्भूतभव्येषुक्याद्यस्त्रयस्त्रिंशदिति अतएववराहादिप्रयोगाः होरांवराहमिहिरोरुचिरां चकारेति ददृयनस्मापिख्यातेनेकिरणाव
लीमिति इतीतिकथंहियस्मात्कारणात्तदुपक्रमस्तेषांसकलकर्मणांदलनकंडनादीनांयउपक्रमः आरंभः सविवाहभेविवाहनक्षत्रेएवशुभेदिनेस्या
तशुभेव्यतिपातविष्ट्यादिमहादोषरहितेषपनवत्रिदिवसेषुनाग्रतइतिनिषिद्धादन्यदिनेचतथाचश्रीपतिः विवाहकृत्यंनिखिलंविवाहभेविलोक्य

भतिथिवारफलानिपदेपदेविरचितानिपरैरितिनोचिरे सकलकर्मसुयस्तदुपक्रमः सहिविवाहभएवशुभेदिने ६ प्रा
योविवाहपटलंतटलंबमानस्तंबोपमंनसहतेनयचालनानि वृंदावनेपरमतातपपीड्यमानवृंदावनेनुरमतामिह
सन्मतिश्रीः ७ इतिविवाहवृंदावनेवधूवरप्रश्नाध्यायःपंचदशः १५

येन्नात्रवलंहिमद्युतेः नचनिपष्ठोपिचवारकः शुभइति अथनि
जकृतस्यास्यविवाहपटलस्यपूर्वेभ्योवैशिष्ट्यमाहई वसंततिलका प्रायोबाहुल्येनविवाहपटलंविवाहफलसमूहः नयेनतर्केणचालनोनिनसहते
हेत्वादिनाचालयितुंनशक्यते आगमसिद्धत्वादितिभावः अत्रविशेषणद्वारेणदृष्टांतः तटेति तटेनदीनटेलंबमानः प्रशिथिलमूलोयस्तंबः स्तृणस्तंबः
तेनोपमीयतेतत्तथा यथातटस्थोलंबमानस्तृणस्तंबोनचालनंसहतेचारितेत्वधःपतनमेवतद्वद्विवाहपटलमपीत्यर्थः अतइदंमयोक्तंवृंदावनेनाम्निवि
वाहपटलेसन्मतिश्रीः संतांविदुषांमतिः बुद्धितस्याःश्रीःसंपद्रमतांसुखेनक्रीडतां अत्रहेतुः कथंभूतेपरमतेति परेषांमतानितदेवातपउष्णंतेनपीड्य

शेषज्ञः ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रंजयति इति ४ इति ग्रंथालंकारः अत्र ग्रंथकृदुक्तयुक्तिममलां व्याख्याय सम्यक्कृतः स्तत्कुत्रापि मद्गद्विरोधिकुहविद्य
थैंद्रयै वोक्षितं सद्युक्त्वा तु निरस्तसारमुदितं तत्त्वम्यतां सज्जना सत्त्वहिम्याः स्वतां प्रतीतिरिह नस्यात्तं निरासं विना १ पश्चात्सागरपूर्ववर्तितटगे ग्रामे त्रनं
द्यादिमेरंभापूगरसालशीर्षनिचुलच्छायावितानेवसत् नानाशास्त्रकलाकलापचतुरः श्रीकेशवोस्यात्मजष्टीकां युक्तिमतीं गणेशविबुधो वृंदावनस्याक
रोत् २ रसनगमनु १४७६ तुल्ये शाक आनंद वर्षे विवृतिमकृतशस्तां दीपिकाख्यां गणेशः यदिह लिखितमल्पानल्पकं वा सदोषं न इति विमलधीभिः शो
ध्यमित्यर्थयेतान् ३ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां स्ववंशवर्णनः



ध्रुवानुराधामृगमूलरेवतीकरं मघास्वातिरदूषणो गणः रवेर मीनात्मकरादिषड्गृहीकरग्रहे मंगलकृन्मृगीदृशां १ क्रूरोज्झितं द्विः
शशिभोगतो वा कृतदाप्यमाद्यं च शुभं न भं स्यात् त्र्यष्टार्कविंशं च कुजार्किभानुस्वर्भानुतः सत्रिविधाद्भुतं च २॥

षोडशोध्यायः १६ विवा
होपपदं वृंदावनं व्याख्याय केशवं तत्कृतां लग्नशुद्धिं च गणेशो व्याचिकीर्षति १ तत्रादौ विहितनक्षत्रादिकमाह ध्रुवादिः करांतोयमेकादशनक्षत्रात्म
को गणश्चेददूषणः वक्ष्यमाणपादवेधादिदोषरहितस्तदा मृगीदृशां स्त्रीणां करग्रहे मंगलकृत्स्यात् १ अथ श्लोकत्रयेण नक्षत्रशुद्धिमाह क्रूरेण
पापग्रहेण उज्झितं त्यक्तं भं नक्षत्रं न शुभं स्यात् तदाप्यं तेन क्रूरग्रहेण आप्यं प्राप्यं भोग्यं आद्यं भुक्तं च अथ लत्ताख्यदृष्टिकुजो भौमः अर्किः शनिः भानुर
विः स्वर्भानुराहुः तेभ्यः सकाशात्क्रमेण त्र्यष्टार्कविंशत्तृतीयमष्टमं द्वादशं विंशं च सत्रिविधाद्भुतं त्रिविधैरुत्पातैर्दिव्यभौमांतरिक्षैरद्भुतैरुत्पातैः सहितं च द्विः श
शिभोगतो वा कृतं न शुभं स्यादिति प्रत्येकं संबध्यते द्विवारं द्विः एभिर्दोषस्तत्रमपि नक्षत्रं द्विधा चंद्रभोगाद्वा कृतं न शुभं द्वितीये चंद्रभोगे शुभं भवतीत्यर्थः

नकुविरस्मिन्वृंदावनेसुतपः श्रयेमुनिगवीनिवहंदुदोह मुनयोगावइव मुनिगव्यः उपमितं व्याघ्रेतिलत्पुरुषः गोरतद्धितलुकीतिटुच् टित्वात् ङीप् तासां
निवहः समूहस्तं दुदोह दुग्धवान् किमर्थं अध्ययनाध्वनीनव्यूहान् अर्थपयः प्रवाहैः प्रतर्पयितुं अध्ययनस्य अध्वा अध्ययनाध्वातमलंगामिन इत्यस्य
ध्ययनाध्वनीनाः अध्ययनमार्गज्ञानशीलाः यध्वनोयत्खावित्यलंगामीत्यर्थेः खगआत्माध्वानौखे इति अवः प्रकृतित्वं तेषां व्यूहाः समूहाः तान् अर्थ
पय इव अर्थपयः तस्य प्रवाहा ओघाः तैः सुष्टुतपो येषां ते सुतपसः सुपुण्याः तैः श्रीयते सेव्यते तत्तथा अत्रायं श्लेषः सुतपोभिः सेव्यमाने वने अध्वगम
नेन खिन्नात्ययः प्रवाहैस्तर्पयितुं गावोदुग्धं तेन तद्रसुपुण्यैः सेव्यमानेस्मिन्वृंदावननाम्नि ग्रंथे अन्यग्रंथाध्ययनेन खिन्नानर्थप्रवाहैस्तर्पयितुं मुनयो

हे व्रजराणगसुतः श्रुतयः श्रयेस्मिन् वृंदावने मुनिगवीनिवहं दुदोह ३ अबहुदृष्टिधियः कियदप्यदः पदगभीरसधीरभि
रंस्यते विषदशास्त्रधियात्विदमेकदा श्रुतिगतं रसनासु विवृत्स्यति ४

मयादुग्धाइति तद्वचनेभ्यः सारं संगृहीतमित्यर्थः अतएत
त्सुज्ञेभ्य एव रोचयिष्यति कथमज्ञेभ्य इत्याशंकायामाह ३ द्रुतविलंबितं नबहु दृष्टं यया सा अबहुदृष्टा सा धीर्यस्यासौ अबहुदृष्टधीः तस्य अल्पदृष्टशा
स्त्रस्य अदः एतदपि कियत् किंपरिमाणमस्येति कियत् विशिष्टगुणमप्येतत्तस्य न किंचिदितिभावः अधीरबुद्धिः ———— अभिरंस्यते अभिरामंभ
स्यति अत्र विशेषणद्वारा हेतुः पदैरिति पदैः गभीरं गंभीरपदं अतिमंदबुद्धिस्तु अर्थं जानातु न वा पदगंभीरत्वादेवाह्लादयिष्यतीत्यर्थः विशदशास्त्रधियां तु
तु विशेषे विशदा अत्याधिका शास्त्रे धीर्येषां ते तथा तेषां तु इदमेकवारमेव श्रुतिगतं कर्णप्राप्तं सत् रसनासु जिह्वासु विवृत्स्यते विवृद्धिं प्राप्स्यति गोप्यरसनागतं
सद्यस्य कस्य कस्यापि नोच्यते इदं कर्णपथेगतं सत् रसनासु विवृत्स्यत इति रुच्यतिशयोक्तिः उक्तं हि भर्तृहरिणा अज्ञः सुखमाराध्यः सुखतरमाराध्यते वि

ष्वशुभाय निधनमष्टमं द्यूनं सप्तमं अंत्यं द्वादशं एतानि वर्जयित्वा अन्येषु नवसु स्थानेषु परे सौम्यग्रहा बुधगुरुशुक्राः शुभाय स्युः शेषेषु निधनद्यू
नांत्येष्वशुभाय शशी चंद्रस्त्वायार्थेषु तृतीयेकादशद्वितीयेषु शुभाय भवेत् शेषेष्वशुभाय तत्राष्टमे सर्वेषां विशेषमाह मृताविति मृतावष्टमे स्थानेत
मः सूर्यः शुभाय स्युः न तु शुभाय अत्र राहुग्रहणात् तत्स्वरूपांतरं केतुश्च परे त्वन्ये चंद्रभौमबुधगुरुशुक्राः मृतौ स्थिता भंगदाः लग्नभंगाय स्युः अन्यानपि लग्नभं
गानाह क्रूरद्यूनेति शशितनू क्रूरद्यूनवृतान्विते भंगाय भवतः द्यूनं वृतमावृतं ययोस्ते द्यूनवृते ते च ते अन्विते च द्यूनवृतान्वितौ क्रमेण द्यूनवृतान्विते ते तथा ल
ग्नस्थश्चंद्रस्सवा सप्तमं क्रूरान्वितं भवेत् यद्वा चंद्रो लग्नं वा क्रूरान्वितं भवेत्तदा लग्नभंगः स्यादित्यर्थः अस्ते सप्तमे लग्नाच्चंद्राद्वा सितश्शौ शुक्रो बुधो वा सोपि भं

65

क्रूरद्यूनवृतान्वितो शशितनू अस्ते सितज्ञौ विधुर्लग्ने सोमसिताधिपाद्विषि सितः सेंदुर्विनष्टोंऽशपः ५ अंशाः षड्विनवाद्धय
स्तदधिपे लग्नांशयोर्द्वादशद्वित्र्यष्टासु न लग्नमस्तलवपे तत्सप्तमाभ्यां तथा गंडांतेषु च वैधृतावुभयतः संक्रांतियामद्वये
यामार्धे व्यतिपातविष्टिकुलिकेमासेन्हि चोनाधिके ६

गाय लग्ने विधुश्चंद्रो भंगाय द्विषि षष्ठे सोमसुताधिपाः भंगाय स्युः सोमश्चंद्रः सितः शु
क्रः अधिपाः स्वामिनः लग्नांशद्रेष्काणानां अत्र षष्ठं लग्नादेव न चंद्रात् सोमग्रहणात् सितः शुक्रः सेंदुः सचंद्रः भंगाय शुक्रयुक्तश्चंद्र इति भावः अंशपो
नवांशाधीशो विनष्टोऽस्तंगतः भंगाय स्यात् अथ नवांशशुद्ध्यादिकमाह अंशा लग्ननवांशाः षड्विनवाद्ध्यः कन्यामिथुनधनुस्तुलाः शुभाः तस्य नवां
शस्याधिपे स्वामिनि लग्ननवांशयोर्लग्नान्नवांशाद्वा द्वादशद्वितीयतृतीयाष्टमेषु स्थिते सति न लग्नं कार्यं अस्तलवपे अस्तांशाधिपे
तत्सप्तमाभ्यां लग्नादंशाच्च सप्तमाभ्यां सकाशात्तयात द्वादशद्वित्र्यष्टासु स्थिते सति लग्नं न कार्यं एषु स्थानेषु सदृष्टिर्नास्तीत्यभिप्रायः अथान्ये महादोषाः

नशुभमित्यग्रे प्यनुवर्तनीयम् २ अथ चंडायुधादिवैवैधृतः सासाध्यः हहर्षणः गंगंडः सूशूलः व्यव्यतीपातः तेषां समाप्तिरेव सानं तत्र सायं सशेषं यत
पिषां योगानामंते वर्तमान मिरार्थः यञ्च संक्रांति साम्यं चंद्रार्कयोस्तेन सहितं यस्मिन्नक्षत्रे महापात इत्यर्थः यञ्च खलवेधवत् पापग्रहवेधयुक्तं तमेव वेध
माह स्वाशेति स वेधः स्वाशाद्यैराद्यक्षरैरुपलक्षितनक्षत्राणां क्रमेण द्वयोर्मिथः स्यात् स यथा स्वास्वाती श शततारका अनयोर्मिथो वेधः स्वातिस्थेन ग्रहेण श
ततारका विद्धा शततारकास्थेन स्वातीति एवमुत्तरत्रापि श्रश्रवणः मः मघा अनयोर्मिथो वेधः भभरणी अनुअनुराधा अनयोर्मिथो वेधः अभि अभिजित्
रोरोहिणी अनयोर्मिथो वेधः पुनः पुनर्वसुः मूमूलं अनयोर्मिथो वेधः रेग्रहाणां वेधः क्रमेण त्रिभिरुत्तरैः स्यात् रेवत्युत्तरफल्गुन्योः मृगोत्तराषाढयोः हस्तो

वैसाहगंमूव्यसमाप्तिसाग्रं संक्रांतिसाम्यं खलवेधवच्च स्वाशश्रमोभान्त्वभिरोपुनर्मूस्वरे ग्रहाणां त्रिभिरुत्तरैः स्यात् ३ ए
कार्गलः साभिजितींदुतोर्कः समास्ति योगेष्वशुभाव्हयेषु चतुर्दशं चेंदुभमर्कधिष्ण्याद्धितायमुक्तो द्वहने स शुद्धिः ४
षट्त्र्यायेष्वशुभाः शुभायनिधनद्यूनांत्यवर्ज्ये परत्र्यायार्थेषु शशी मृतौ शनितमः सूर्याः परे भंगदाः

त्तराभाद्रपदयोरित्यर्थः ३ अत्रैका
र्गलादिकमाह अशुभाव्हयेषु दुष्टनामसु योगेषु सत्सु इंदुतः इंदुनक्षत्रात् अर्कः सूर्यः साभिजितिसमे ऋक्षे भवति तदा एकार्गलोस्ति एतदुक्तं भवति व्या
घातशूलपरिघव्यतिपातविष्कंभगंडातिगंडवज्रवैधृताः अशुभनामयोगाः एषु अन्यतमे योगे सति चंद्रनक्षत्रमारभ्य अभिजिता सह अर्कनक्षत्रगणपि
ता यदि युग्मा संख्या भवति तर्हि एकार्गलः स्यात् तद्द्वनशुभमित्यनुवृत्तिः अथ संध्योदितं अर्कधिष्ण्याच्चतुर्दशमिंदुभं चंद्रनक्षत्रं च अशुद्धमशुभं स्यात् इती
यं ३ द्वहने स्यविवाहनक्षत्रस्य शुद्धिरुक्ता ४ अथ लग्नशुद्धिमाह षट्षष्ठं त्र्यस्तृतीयं आय एकादशं स एष्वशुभाः पापग्रहाः शुभाय भवंति शेष

वेदाभ्यत्वार्यंगुलानि इभाच्चयोष्टचत्वारिंशद्धंगुलानि इयंकिलसर्वत्रनर्मदातीरे पलभास्यात् तस्माद्याम्योत्तरे पथिएकयोजनेनव्यंगुलंतस्याः पलभायाः
ह्रसतिपुष्यति चस्वदेशनर्मदयोर्याम्योत्तरांतरे यावंतियोजनानितत्तुल्यव्यंगुलैः सानार्मदीपलभा४।४८ याम्यदेशेरहिता उत्तरेसहितास्वदेशफलभाभवेदि
त्यर्थः साविविधादशनागदिग्भिर्हता अंत्यापुनः अंतिमातुदहनहृत्त्रि३हता चरखंडकानिस्युः अथोदयाः ८ कृष्णागतयोवन्हयः शेषाः प्रसिद्धाः एतेत्रयोलंको
दयाः स्युः तैस्तैश्चरखंडकैस्त्रिभिक्रमेणहीनाः विलोमविहिताउत्क्रमस्थाः विलोमैश्चरखंडकैः क्रमेणसहिताः एवंमेषादीनांषण्णांजाताः तेपुनर्व्यस्ताः एवंद्वाद

वेदाइभोव्धयइयंकिलनार्मदीभातद्ध्यंगुलंह्रसतिपुष्यतियोजनेन याम्योत्तरेपथिहताद्दशनागदिग्भिरंत्यापुनर्दहनहृच्च
रखंडकानि८ लंकोदयाभुजगभानिनवांकदस्रावह्निदिकृष्णगतयश्चरखंडकैः स्वैः हीनाविलोमविहिताः सहितावि
लोमैर्व्यस्ताः पुनस्स्वविषयोदयजाविनाड्यः९ वेदात्यष्टिगुणाग्निधूर्जटिगजन्यत्यष्टिदृग्विश्वभूमूर्छाभिर्धनुषोनिहत्यवि
भजेल्लग्नेष्टवारांस्त्रिभिः मीनादिषधनंतुलादिषुधनंलिप्ताः स्फुटोभास्करः १० ॥

शस्वदेशोदयजाविनाड्यः स्युः ९ अथसंक्रांतेरर्के
ज्ञानमाह अत्यष्टिः सप्तदश धूर्जटयोरुद्राः मूर्छाएकविंशतिः अर्थाः पंचकामांकुशाः नखाः शेषागुणाहराश्चप्रसिद्धाः लग्नेष्टवारान् लग्नकालपर्यंतं
संक्रांतिमारभ्येष्टदिवसान् धनुषः धनुः संक्रांतिमारभ्य वेदिभिर्द्वादशगुणकैर्यथाप्राप्तैः क्रमेणनिहत्यातिथ्यादिभिर्द्वादशभिर्विभजेत् फलंलिप्ताः मीनादि
षकन्यांतासुगतेर्के अधनंतुलादिकुंभांतसुधनंकृत्वास्फुटोभास्करः स्यात् एतदुक्तंभवति संक्रमवशादर्कराशीन् ज्ञात्वासंक्रममारभ्य इष्टदिनपर्यंतं वे
दादिदिवसास्तेतदधींशाः स्युः तेदिवसाः पृथक्धनुरारभ्य यथाक्रमप्राप्तेनगुणकेनसंगुण्य यथाप्राप्तहरेणविभज्यकलादियल्लब्धंतत्तस्मिन् रवौमीना



66

गंडांतेष्विति त्रिविधेषु गंडांतेषु शूलवैधृतवरीयसामिसुक्तेषु वैधृतौ सप्तविंशयोगे च संक्रांतेः सकाशाद्भयतः पूर्वं पश्चाच्च यामद्वये षोडश घटीषु च यामार्धमर्धयामः शास्त्रांतरोक्तः व्यतिपातः सप्तदशो योगः विष्टिर्भद्रा सप्तमं करणं कुलिकः द्विमूनामन वइत्यादिनोक्तः तस्मिन् ऊनाधिके मासि क्षयमासे धिमासे चेति ऊनाधिकेन्हि दिनक्षये दिनवृद्धौ चेति न लग्नं कार्यमिति प्रत्येकं संबंधः ६ अथाष्टमलग्नादिदोषानाह जन्मर्क्षाज्जन्मलग्नाच्च अष्टमद्वादशाभ्यां लग्ने स्थिताभ्यां क्रमेण निधनविधनेस्तः जन्मराशेर्जन्मलग्नाद्वाष्टमे राशौ लग्नगते सति निधनं द्वादशे विधनं स्यादित्यर्थः तत्स्वामितत्स्थैः तयोरष्टमद्वादशराश्योः स्वामिनौ तत्स्वामिनौ योरष्टमद्वादशराश्योः स्थिताः तत्स्थास्तैः स्वगैरपि वपुषि लग्ने स्थितैः क्रमेण निधननिधनेस्तः अष्टमस्थानाधीशेष्टमस्थे वा ग्रहे लग्नगते सति निधनं

जन्मर्क्षाज्जन्मलग्नान्निधनविधनते अष्टमद्वादशाभ्यां लग्ने तत्स्वामितत्स्थैरपि वपुषि खगैस्तद्गृहांशेश्च तेस्तः अस्तेशारेर्नवांशे व्यसनमसुभयं नाडिवेधे षडष्टे त्रेशानामसख्ये दनुजनरगणे वार्कजीवेंदुशुद्धौ ७

द्वादशस्थानाधीशे द्वादशस्थे वा ग्रहे लग्नगते सति विधनता स्यादित्यर्थः तद्गृहांशेः तेषां ग्रहाणां यानि गृहाणि तेषामंशा नवांशास्तैश्च वपुषि गतैः ते निधनविधनते क्रमेणास्तः अष्टमराशेरष्टमस्थग्रहस्य राशेर्वा नवांशे लग्नगते सति निधनं द्वादशराशेर्द्वादशस्थग्रहस्य राशेर्वा नवांशे लग्नगते विधनता स्यादित्यर्थः अस्तेशारेः अंशादस्तं सप्तमं तस्येशः स्वामी तस्यारिः शत्रुस्तस्य नवांशे लग्नगते सति व्यसनं स्यात् अथ मेलकः असुभयं इति रुद्रार्यमेइत्यादिना नारीनरयोर्नक्षत्रयोर्नाडीवेधे सति असुभयं मरणं स्यात् षडष्टके त्रेशानां स्त्रीनरराश्योर्मिथः षडष्टकराश्यधिपानां असख्ये वैरे सति असुभयं स्यात् त्रिपूर्वेत्यादिना दनुजनरगणे राक्षसमनुष्यगणे च असुभयं स्यात् अर्कजीवेंदुशुद्धौ च गोचरमार्गेण दंपत्योः सूर्यगुरुचंद्राणां बलालाभे सति मरणं स्यादित्यर्थः ७ एवं लग्नांशशुद्धिं ज्ञात्वा तस्मात्कालज्ञानार्थं पलभा चरोदयादीनाह

र्थः अथ चरार्धमिति त्रिंशद्गुमानांतरमर्धितं चरार्धं स्यात् अर्थात् घटिकात्मकं मतः षष्टिगुणं पलानि स्युरिति अथ वारप्रवृत्तिमाह नरार्धदेशोत्तरयुक्वि
योगौ कार्यौ याम्यगोले योग उत्तरगोले वियोग इत्यर्थः योगे जाते सति तत्तुल्यपदैः स्युः स्यात्पुरा पूर्वं वियोगे पश्चात् अनंतरं दिनवारकर्तुः दिनाधीशस्य प्रवृ
त्तिः स्यात् वारप्रवृत्तिरिति यावत् इयं वारप्रवृत्तिः अर्कोदयादूर्ध्वमधश्च ताभिः इत्यादि यो गोलवासनया संहितावचनैश्च कश्चिद्विरुध्यते अतोत्रैतस्यं गति
श्चिंतनीया ग्रंथकारस्तु अवंत्याः पश्चिमदेशे आसीत् अतस्तेन स्वदेशाभिप्रायेणोदमुक्तं तथाप्युत्तरगोले देशांतरपलेभ्योल्पचरार्धे सति वियोगे पश्चाद
न्यथात्वं भवति तत्र वियोगेपि पूर्वमिति इष्टव्यं एवं व्यभिचारः परिहर्तव्यः १४ अथ प्रकारांतरेण कालहोरामाह दिनपप्रवेशाद्द्विघ्नेष्टनाडीशरलब्धिताः

पलानि देशांतरयोश्चरार्धं त्रिंशद्गुमानांतरमर्धितं स्यात् १४ द्विघ्नेष्टनाडीशरलब्धितो वा स्युः कालहोरा दिनपप्रवे
शात् प्राग्वद्धरघ्ना गणयेद निंद्या क्रूरापि लग्ने शुभवेदवर्गे १५ राश्यंशाः शशिभूगुणेक्षणहतास्तिथ्यभ्रभूदिक्शरै
र्भक्ता भार्धहकाणनंददिनकृद्भागा गृहं यस्य यत् ॥

कालहोरास्युः वारप्रवेशमारभ्य इष्टघटिका द्विघ्नाः शरभक्ताः लब्धं कालहोराः
स्युरित्यर्थः ताः शरघ्नाः प्राग्वद्गणयेत् तद्यथा तत्प्रमाणं निरवयवं वारादितो गणयित्वा गतानां लहोरा स्यात्तत्परस्य वर्तमाना इत्यर्थः एवं प्रकारद्वयेनापि
क्रूरापापहोरापि अनिंद्या अदुष्टा स्यात् कस्मिन्सति लग्ने शुभवेदवर्गे सति शुभानि वेदाश्चत्वारो वर्गा यस्मिंस्तत्तथा सौम्यवर्गाधिकत्वे सतीति भावः १५ अथ
षड्वर्गानाह राश्यंशाः राशिभुक्ताभक्ताः राशिभुक्ताः भक्ताः राशीन्संत्यज्य अंशा ग्राह्या इत्यर्थः ते चतुर्षु स्थानेषु क्रमेण शशिभूगुणेक्षण १।१।३।२ हतास्तिथ्य
भ्रभूदिक्शरै १५।१०।१०।५ भक्ता अभ्रभुवोः दशशेषा सिद्धाः लब्धानि भार्धादयो वर्गाः स्युः भार्धं होरा हकाणो द्रेष्काणः नंद दिनकृद्भागौ नवांशद्वादशां

रिषुसप्तसु गतेऽऋणं तुलादिषं चसु गतेधनं कार्यं सदृष्टदिने स्फुटः सुर्यस्यादिति १० अथ कालज्ञानं स्पष्टार्थं ११ अथेष्टकालाल्लग्नज्ञानमाह रवेर्भोग्य
कालमुदयैः सह इष्टघटीपलेभ्यस्त्यक्त्वा भोग्यं तदग्रोदयांश्च त्यक्त्के त्यर्थः तदुद्धृतानि तदुर्वरितानि यानि पलानि तानि त्रिंशद्गुणितानि अगलितोदयेन
भाजितानि भागादियल्लब्धं तदजादिगृहशेखरितं तनुर्लग्नं स्यात् शेखरो मुकुटः शेखरो जातास्मिन् तच्छेखरितं अजादिगृहैः शेखरितं अजादिगृहशेख
रितं मूर्धनि मेषादिराशिसहितमित्यर्थः १२ अथ षड्वर्गहोरादिकमाह कलानां द्विशतीनवांशमानं स्यात् इष्टांशात्पूर्वांशाद्द्विशतगुणा लग्नकलाः सुरिति

राज्ञो भानुर्भार्धयुक्सायनांशस्तत्त्वकांशाः स्वोदयघ्नाः पृथक्के त्रिंशद्भक्ता भुक्तभोग्याः पलादिस्ताह क्रालोमध्यगास्वोदयाढ्यः
११ भोग्यं रवेः समयमिष्टघटीपलेभ्यस्त्यक्त्वोदयैः सह फलानि तदुद्धृतानि त्रिंशद्गुणान्यगलितोदयभाजितानि भागाद्यजा
दिगृहशेखरितं तनुः स्यात् १२ नवांशमानं द्विशती कलानां सूर्योनलग्नस्य शरेन्दुभागे वारादिहोराविगताशरघ्नं षड्वर्गचिं
तां तु विना यनांशैः १३ अवंति पूर्वापर योजनानि स्वपादहीनानि ऋणान्नृणेस्तः ॥

भावः तस्मात् लग्नात् षड्वर्गचिंता अयनांशैर्विनास्या
त् षड्वर्गचिंतायां अयनांशान्न देयाइत्यर्थः षड्वर्गान्वक्ष्यति अथ होरावारादिति वारादेर्वारस्याभ्याविगता होरा स्यात् कस्मिन् सति सूर्योनलग्नस्य शरेन्दु
भागे शरघ्ने सति सूर्योनलग्नस्यांशानां पंचदशांशांशेषं विरहितं पंचघ्नं कृत्वा तं वारमारभ्य वारक्रमेण गणयित्वा गता होरा स्यात्तत्परस्य वर्तमाना स्यादि
त्यर्थः अथ होरायाः प्रकारांतरार्थं देशांतरं चरे आह १३ अवंतिरुज्जयिनी सा मध्यरेखा पलक्षणं तस्याः सकाशात्पूर्वापरे पूर्वे पश्चिमे वा स्वदेशपर्यंत
यानि योजनानि तानि स्वपादहीनानि स्वचतुर्थांशोनितानि देशांतरयोः पलानि स्युः तानि क्रमेणाऋणान्नृणेस्तः पूर्वे ऋणसंज्ञानि पश्चिमे धनसंज्ञानीत्य

शौ एवं चत्वारो वर्गाः यस्य ग्रहस्य यद्गृहं तत्तस्यैव अयमेको गृहाख्यः अथ त्रिंशांशा इति समराशौ सितादीनां पंचादयस्त्रिंशांशाः स्युः त्रिंशतः पूरणास्त्रिं
शा तेच ते अंशाश्च त्रिंशांशाः तद्यथा समराशौ आद्याः पंच भागाः शुक्रस्य ततः सप्त बुधस्येत्यादि ओजर्क्षेषु विषमराशिषु व्युत्क्रमात् भागानामधिपतीनां
च तद्यथा आद्याः पंच भौमस्य ततः पंच शनेरित्यादि इतीयं षड्वर्गिका स्यात् षण्णां वर्गाणां समाहारः षड्वर्गी सैव षड्वर्गिका अथ ग्रहगणितोक्तमपि द्यु
मानानयनं सुगमोक्त्या हि १६ सायनसूर्यस्य यत्साग्यद्भोग्यं सायनसूर्यस्य सषड्भस्य यच्च भुक्तं तत् मध्योदयेतरदेतद्वर्तिषु मध्योदयेषु युक्तं द्युमानं स्या
त् अथालंकारः इतीयं विलग्नस्य विवाहलग्नस्य शुद्धिः शिशुबोधनाय बालावबोधाय श्रीकेशवार्केण स्मृता संक्षिप्य कथिता १७ इति श्रीसकलाग

त्रिंशांशाः शनिसौम्यजीवरविजस्माजन्म नांव्युत्क्रमादोजर्क्षेषु शरेषु सर्पमरुतः पंचेति षड्वर्गिका १६ महोदयेसायन
सूर्यभोग्यं सषड्भुक्तं च युतं द्युमानम् इति स्मृतं यं शिशुबोधनाय श्रीकेशवार्केण विलग्नशुद्धिः १७ इति विवाहवृं
दावने लग्नशुद्धिः सप्तदशोऽध्यायः॥ १७ ॥ ॥

माचार्यवर्यश्रीकेशव — सांवत्सरात्मजगणेशविरचिता — केशवार्कोदित
लग्नशुद्धेर्विवृत्तिः समाप्ता अत्र समूलाग्रंथसंख्या १७५ पादोन द्विशती समस्तग्रंथसंख्या ३३७५ हायनार्कलचतुल्यमायनतुद्युतीरसयुताग्र
तिर्भवेत् सापि सागरयुतोडुपोदुकं तत्त्रिनेत्रलवरएवपक्षकः पक्षः सपक्षोयदि वासरः स्यात्तदीयरामांशसमस्तिथिः स्यात् यच्चाखिलैकांकुयमाहतं
तन्नंदादिकं मकुकवत्सराः स्युः तदयनतिथिपक्षास्तुल्यतां यांति यस्मिन्गुरुवरणाब्जालंबरोलंबकृष्णाः गणकवरगणेशप्राक्तटीकामशेषामखिल
दखिलसारैर्मालिनीं वाग्विशेषैः ॥ ॥
चर

॥ श्रीकाशीविश्वनाथपुरीमेंमहल्लाकोटकीपिअरीपरबाबूकोलेश्वरसिंहकेमकानमेंबाबूकिशुनदयाल
सिंहकेगनेशप्रभाकरछापाखानेमे सटीकविवाहवृंदावन छापागया जिस्कोलेनाहोयसोनईसडकपरबाबूकोले
श्वरसिंहकेदुकानपरमिलेगी सोधावालशास्त्रीप्रभुणेनेबहुतशुद्धतापूर्वक संवत् १९५३ ज्येष्ठ शुक्ल १० ॥